## ४९३। पूतक्रतोरै च। (४-१-३६)

अस्य स्त्रियामै आदेशो ङीप्च। 'इयं त्रिसूत्री पुंयोग एवेष्यते' (वा २४४९)। पूतक्रतोः स्त्री पूतक्रतायी। 'यया तु क्रतवः पूताः स्यात्पूतक्रतुरेव सा'।

## ४९४। वृषाकप्यग्निकुसितकुसिदानामुदात्तः। (४-१-३७)

एषामुदात्त ऐ आदेशः स्यान्ङीप्च। वृषाकपेः स्त्री वृषाकपायी। "हरविष्णू वृषाकपी" इत्यमरः। 'वृषाकपायी श्रीगौर्योः' इति च। अग्नायी। कुसितायी—कुसिदायी। कुसिदशब्दो ह्रस्वमध्यो न तु दीर्घमध्यः।

## ४९५। मनो रौ वा। (४-१-३८)

---

नित्यं सभाव इति भावः। **समानः पतिरिति** ॥ अत्र समानशब्द एकपर्यायः, पतिशब्दस्तु विवाहनिबन्धनभर्तृशब्दपर्यायः। **वीरपत्नीति** ॥ वीरः पतिर्यस्याः इति विग्रहः। सपत्न्यादित्वान्नत्वम्। **पूतक्रतोरै च** ॥ ऐ इति लुप्तप्रथमाकम्। पूतक्रतुशब्दात् स्त्रियां ङीप्स्यात्, प्रकृतेरैकारोऽन्तादेशश्चेत्यर्थः। **इयं त्रिसूत्रीति** ॥ वार्तिकमिदम्। पूतक्रतोरित्यादिसूत्रत्रयं पुंयोगात् स्त्रियां वृत्तावेवेत्यर्थः। **पूतक्रतायीति** ॥ पूतः क्रतुः येन सः पूतक्रतुः, तस्य स्त्रीत्यर्थे ङीप्, तकारादुकारस्य ऐकारः, तस्य आयादेश इति भावः। पुंयोगः इत्यस्य प्रयोजनमाह। **ययेति** ॥ **वृषाकप्यग्नि** ॥ ऐ चेत्यनुवर्तते। तदाह। **एषामिति** ॥ **वृषाकपायीति** ॥ ङीप् प्रकृतेरुदात्तः ऐकारोऽन्तादेशः, तस्य आयादेशः, तस्य ऐकारस्थानिकत्वात् तदाकारोऽप्युदात्तः। 'अनुदात्तं पदमेकवर्जम्' इति अवशिष्टानामचामनुदात्तत्वम्। उदात्त इति किम्। 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति वृषाकपिशब्दो मध्योदात्तः। 'नाहमिन्द्राणिरारणसख्युर्वृषाकपेः' इति यथा। अन्ते एकस्मिन् लघौ सति द्वयोर्वा लघ्वोस्सतोः पूर्वः बह्वच्कस्य गुरुः उदात्तस्स्यादिति तदर्थः। ततश्च षकारादाकारस्य उदात्तत्वे 'अनुदात्तं पदमेकवर्जम्' इत्यवशिष्टानामचामनुदात्तत्वमिति स्थितिः। तथा च पकारादिकारस्यानुदात्तत्वात् तत्स्थाने ऐकारः अनुदात्तस्स्यात्। ततश्च तदादेशभूतायादेशाकारस्याप्यनुदात्तत्वं स्यात्। अतोऽत्र उदात्तत्वविधिः। **अग्नायीति** ॥ 'अग्निर्मूर्धा' इत्यादौ अग्निशब्दः अन्तोदात्तः, ततो ङीप्, प्रकृतेरैकारोऽन्तादेशः, स च भवन्नान्तर्यादुदात्त एव भवति। अतस्तदादेशायादेशाकारस्य उदात्तत्वसिद्धेरुदात्त इत्येतदग्निशब्दे अन्वयं न लभते, प्रयोजनाभावात्। **कुसितायी—कुसिदायीति** ॥ कुसितकुसिदे अव्युत्पन्नप्रातिपदिके देवताविशेषस्य नामधेये, फिट्स्वरेणान्तोदात्ते, ततो ङीप् ऐकारश्चान्तादेशः, सच भवन्नान्तर्यादुदात्त एवेति, कुसितकुसिदशब्दयोरपि उदात्त इत्यस्य नान्वय इति वृत्त्यादिग्रन्थेषु स्थितम्। अत एवाह। **कुसिदशब्दो ह्रस्वमध्यो न तु दीर्घमध्यः इति** ॥ ह्रस्वमध्यत्वे हि 'लघावन्ते' इति मध्योदात्ततया शिष्टस्वरेण दकारादकारस्यानुदात्ततया तत्स्थाने ऐकारस्यानुदात्ततया तत्स्थाने आकारस्यानुदात्तत्वापत्त्या तन्निवृत्त्यर्थं तत्राप्युदात्तग्रहणस्यावश्यकत्वादुदाहृतवृत्त्यादिग्रन्थविरोधः स्पष्ट एवेति भावः। **मनो रौ वा** ॥

मनुशब्दस्यौकारादेशः स्यादुदात्तैकारश्च वा । ताभ्यां सन्नियोगशिष्टो ङीप्च । मनोः स्त्री मनायी–मनावी–मनुः ।

## ४९६ । वर्णादनुदात्तात्तोपधात्तो नः । (४-१-३९)

वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद्वा ङीप्स्यात् तकारस्य नकारादेशश्च । एनी–एता । रोहिणी–रोहिता । 'वर्णानां तणतिनितान्तानाम्' (फि ३३) इति फिट्सूत्रेणाद्युदात्तः । 'त्र्येण्या शलल्या'

ए चेति, उदात्त इति, ङीबिति, चानुवर्तते । तदाह । **मनुशब्दस्येति** ॥ **उदात्त ऐकारश्च वेति** ॥ औकार ऐकारश्च वा स्यादित्यर्थः । उदात्तैकार इति समाननिर्देशादुदात्त इत्यौकारेण न सम्बध्यत इति सूचितम् । तच्च वृत्तिपदमञ्जर्योः स्पष्टम् । चकारात् ङीप् ऐकारौकाराभ्यां समुच्चीयते । तदाह । **ताभ्यामिति** ॥ ऐकारौकाराभ्यां समुच्चयेनैव विहित इत्यर्थः । ततश्च तदुभयाभावपक्षे ङीबपि नेति लभ्यते । 'सन्नियोगशिष्टानां सह वा प्रवृत्तिस्सह वा निवृत्तिः' इति परिभाषावशादिति भावः । इयन्तु परिभाषा 'पूतक्रतोरै च' इतिसूत्रभाष्ये स्थिता । **मनायीति** ॥ 'यद्वै किञ्च मनुरवदत्' इत्यादौ मनुशब्दो 'ञ्नित्यादिर्नित्यम्' इति आद्युदात्तः । 'धान्ये नित्' इत्यतो निदित्यनुवृत्तौ 'शृस्वृस्निहि' इत्यादिना मनेरुप्रत्ययविधेः । ततश्च शिष्टस्वरेण नकारादुकारः अनुदात्तः, तस्य स्थाने उदात्त ऐकारः, तस्यायादेशः ङीप् चेति भावः । **मनावीति** ॥ अत्रौकारोऽनुदात्त एव । **मनुरिति** ॥ ऐकारस्य औकारस्य चाभावे तत्सन्नियोगशिष्टो ङीबपि नेत्युक्तमेव । **वर्णादनु** ॥ वेति ङीबिति चानुवर्तते । अनुदात्तादिति वर्णादित्यस्य विशेषणम्, तदन्तविधिः, तोपधादित्यपि वर्णादित्यत्रान्वेति, तकारः उपधा यस्येति विग्रहः । तकारादकार उच्चारणार्थः । वर्णादित्यस्य 'स्वं रूपं शब्दस्य' इति वर्णशब्दादिति नार्थः, तोपधत्वासम्भवात् । किन्तु वर्णवाचिनश्शब्दादित्यर्थो विवक्षितः । वर्णादित्येतत्प्रातिपदिकादित्यस्य विशेषणम्, तदन्तविधिः, त इति षष्ठी । तकारस्येत्यर्थः । न इत्यत्र नकारादकार उच्चारणार्थः, नकार इत्यर्थः । तदाह । **वर्णवाचीत्यादिना** ॥ **तदन्तादनुपसर्जनादिति** ॥ अनुपसर्जनादित्यनुवृत्तं वर्णान्ते अन्वेति, नतु वर्णादित्यत्रेति भावः । **एनी–एतेति** ॥ श्वेतेत्यर्थः । एतशब्दात् ङीप्, तकारस्य नकारश्च, ङीबभावे टाबेव, नत्वन्तु न भवति, ङीपा सन्नियोगशिष्टत्वात् । एतशब्दश्श्वेतपर्याय इति कल्पसूत्रव्याख्यातारो धूर्तस्वामिभवस्वामिरुद्रदत्तप्रभृतयो याज्ञिकाः । **रोहिणी–रोहितेति** ॥ रोहितशब्दो रक्तवर्णपर्यायः । ङीपि णत्वे रोहिणीति, तदभावे टाप् । अनुदात्तान्तत्वं गमयितुमाह । **वर्णानामिति** ॥ तान्तेत्यत्र तकारादकार उच्चारणार्थः । त, ण, ति, नि, त् इत्यन्तानां आदिरुदात्त इत्यर्थः । एतः शाणः, शितिः, पृश्निः, पृषत् इति क्रमेणोदाहरणानि । प्रकृते एतशब्दे एकारस्य रोहितशब्दे ओकारस्य चोदात्तत्वे 'अनुदात्तं पदमेकवर्जम्' इति शिष्टस्वरेण अवशिष्टानामनुदात्तत्वादन्तानुदात्तत्वमित्यर्थः । ननु 'अनुपसर्जनात्' इत्यनुवृत्तस्य श्रुतवर्णविशेषणत्वमेव युक्तम्, नतु तदन्तविधिलभ्यवर्णान्तविशेषणत्वमित्यत आह । **त्र्येण्येति** ॥ त्रीणि एतानि श्वेतानि

इति गृह्यम् । त्रीण्येतान्यस्या इति बहुव्रीहिः । 'अनुदात्तात्' किम् । श्वेता । 'घृतादीनां च' (फि २१) इत्यन्तोदात्तोऽयम् । अत इत्येव । शितिः स्त्री । 'पिशङ्गादुपसंख्यानम्' (वा २४५५) । पिशङ्गी—पिशङ्गा । 'असितपलितयोर्न' (वा २४५३) । असिता । पलिता । 'छन्दसि क्नमेके' (वा २४५४) असिक्नी । पलिक्नी । अवदातशब्दस्तु न वर्णवाची, किं तु विशुद्धवाची । तेन अवदाता इत्येव ।

## ४९७ । अन्यतो ङीष् । (४-१-४०)

अवयवसंस्थानानि यस्या इति बहुव्रीहौ त्र्येतशब्दः । तत्र एतशब्दस्य वर्णवाचिनः उपसर्जनत्वात् 'ङीन्नत्वे न स्याताम् । अनुपसर्जनादित्यस्य वर्णान्तविशेषणत्वे तु त्र्येतशब्दस्यानुपसर्जनत्वान्न दोष इति भावः । **शलल्येति** ॥ शल्यकाख्यमृगविशेषस्य अङ्गरुहा सूची शललीति याज्ञिकप्रसिद्धिः । **गृह्यमिति** ॥ गृह्यन्ते सङ्गृह्यन्ते औपासनाग्निसाध्यकर्माण्यत्रेति व्युत्पत्त्या आपस्तम्बाश्वलायनादिप्रणीतकल्पसूत्रविशेष उच्यते । त्र्येण्येति णत्वमार्षम् । यजुर्वेदे तु 'त्रि एण्या शलल्या निवर्तयेत' इति पठितम् । तत्र त्रीणि एतानि श्वेतानि यस्या इति विग्रहः । यणभावो णत्वञ्च आर्षमिति वेदभाष्ये भट्टभास्करः । ननु 'वर्णानान्तणाति' इति श्वेतशब्दस्याद्युदात्तत्वात् शिष्टस्वरेणानुदात्तान्तत्वमेवेत्यत आह । **घृतादीनामिति** ॥ **अत इत्येवेति** ॥ 'अजाद्यतष्टाप्' इत्यस्मात् अत इत्यनुवर्तत एवेत्यर्थः । **शितिः स्त्रीति** ॥ "शिती धवळमेचकौ" इत्यमरः । **पिशङ्गीति** ॥ 'लघावन्ते' इति पिशङ्गशब्दस्य मध्योदात्ततया शिष्टस्वरेणानुदात्तान्तत्वेऽपि तोपधत्वाभावात् अप्राप्तो ङीबुपसङ्ख्यायते । 'अन्यतो ङीष्' इति वक्ष्यमाणङीषोऽपवादः । स्वरे विशेषः । **असितेति** ॥ वार्तिकमेतत् । असितशब्दस्य कृष्णवाचकतया पलितशब्दस्य श्वेतवाचकतया च 'वर्णादनुदात्तात्' इति प्राप्ते ङीन्नत्वे निषिध्येते । **छन्दसि क्नमेके इति** ॥ इदमपि वार्तिकम् । असितपलितयोस्तकारस्य ङीप्सन्नियोगेन क्नादेशम् अन्ये आचार्या इच्छन्तीत्यर्थः । **असिक्नीति** ॥ असितशब्दात् ङीप्तकारस्य क्नादेशे पररूपे 'यस्येति च' इत्यकारलोपः । क्न इति नकारान्त एवादेश इत्यन्ये । एवं पलिक्नीत्यपि । "पलितं जरसा शौक्ल्यम्" इत्यमरः । ननु "अवदातः सितो गौरः" इति कोशादवदातशब्दस्य वर्णवाचित्वात् 'लघावन्ते' इति मध्योदात्ततया अनुदात्तान्तत्वात्तोपधत्वाच्च 'वर्णादनुदात्तात्' इति ङीन्नत्वे स्यातामित्यत आह । **अवदातशब्दस्त्विति** ॥ "अवदातस्सिते पीते शुद्धे" इति कोशात् । 'दैप् शोधने' इत्यस्मात् तप्रत्यये अवदातशब्दस्य व्युत्पत्तेश्चेति भावः । एतच्च 'पुंयोगादाख्यायाम्' इति सूत्रे भाष्ये स्पष्टम् । "अवदातस्सितो गौरः" इति कोशस्तु शुद्धत्वसाधर्म्यात् बोध्यः । **अन्यतो ङीष्** ॥ पञ्चम्यास्तसिः । वर्णादिति, अनुदात्तादिति, तोपधादिति, चानुवर्तते । तत्र कस्मादन्यतः इत्यपेक्षायां तोपधादिति प्रतियोगित्वेनान्वेति । तोपधापेक्षया अन्यत इति । तदाह । **तोपधभिन्नादिति** ॥ **कल्माषीति** ॥ चित्रवर्णेत्यर्थः । 'चित्रकिम्मीरकल्माषशबलैताश्च

तोपधभिन्नाद्वर्णवाचिनोऽनुदात्तान्तात्प्रातिपदिकात्स्त्रियां ङीष्स्यात् । कल्माषी । सारङ्गी । लघावन्ते द्वयोश्च बह्वषो गुरुः' (फि ४२) इति मध्योदात्तावेतौ । 'अनुदात्तान्तात्' किम् । कृष्णा । कपिला ।

## ४९८ । षिद्गौरादिभ्यश्च । (४-१-४१)

षिद्भ्यो गौरादिभ्यश्च ङीष्स्यात् । नर्तकी । गौरी । अनडुहः स्त्रियां आम् वा' (वा ४३७८) । अनडुही--अनड्वाही । पिप्पल्यादयश्च' (ग ४७) । आकृतिगणोऽयम् ।

## ४९९ । सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः । (६-४-१४९)

अङ्गस्योपधायाः यस्य लोपः स्यात्स चेद्यः सूर्याद्यवयवः । 'मत्स्यस्य ङ्याम्' (४१९८) । 'सूर्यागस्त्ययोश्छे च ङ्यां च' (वा ४१९९) ।

कर्बुरे" इत्यमरः । **सारङ्गीति** ॥ "सारङ्गश्शबले त्रिषु" इत्यमरः ॥ 'फिषोऽन्त उदात्तः' इत्यन्तोदात्तत्वशङ्कां व्युदस्यति । **लघाविति** ॥ एतत्सूत्रं वृषाकपीति व्याख्यावसरे व्याख्यातम् । **कृष्णा । कपिलेति** ॥ फिट्स्वरेणान्तोदात्ताविमाविति भावः । **षिद्गौरादिभ्यश्च** ॥ ष् इत् येषान्ते षितः, गौरः आदिः येषान्ते गौरादयः, षितश्च गौरादयश्चेति द्वन्द्वः । **नर्तकीति** ॥ 'नृती गात्रविक्षेपे' 'शिल्पिनि ष्वुन्' 'षः प्रत्ययस्य' इति षकार इत्, 'हलन्त्यम्' इति नकारश्च इत्, 'युवोरनाकौ' इति अकादेशः, लघूपधगुणः, रपरत्वम्, नर्तकशब्दात् ङीष्, टापोऽपवादः, 'यस्येति च' इत्यकारलोपः इति भावः । **गौरीति** ॥ श्वेतेत्यर्थः । फिट्स्वरेण अन्तोदात्तत्वात् 'अन्यतो ङीष्' इत्यप्राप्तेरिह विधिरिति भावः । संज्ञाशब्दो वायम् । "उमा कात्यायनी गौरी" इत्यमरः । 'दशवर्षा भवेद्गौरी' इति स्मृतिः । **अनडुही-अनड्वाहीति** ॥ अनडुहः स्त्रीत्यर्थः । अनो वहतीति यौगिको वा । गौरादिगणे निपातनादेव ङीषि आम्विकल्पः । एवञ्च 'अनुडुहः स्त्रियाम् आम् वेति वक्तव्यम्' इति वार्तिकन्न कर्तव्यमिति भावः । **पिप्पल्यादयश्चेति** ॥ अत्र गौर, मत्स्य, मनुष्य, शृङ्ग, गवय, हय, मुकय, गौतम, अनड्वाही, अनडुही, तरुण, तलुन, श्वन्, इति पठित्वा 'पिप्पल्यादयश्च' इत्युक्त्वा पिप्पली, हरीतकी, कोशातकी, पृथिवी, मातामही, इत्यादि पठितम् । तत्र पिप्पलीशब्दस्य जातिवाचित्वेऽपि नियतस्त्रीलिङ्गत्वात् ङीषोऽप्राप्तेरिह पाठः । श्वन्शब्दस्य तु 'ऋन्नेभ्यः' इति ङीपि प्राप्ते ङीषर्थः इह पाठः । स्वरे विशेषः । **आकृतिगणोऽयमिति** ॥ गौरादिरित्यर्थः । पिप्पल्यादेरवान्तरगणत्वे प्रयोजनं चिन्त्यम् । मत्स्यशब्दात् गौरादित्वात् ङीषि विशेषन्दर्शयितुमाह । **सूर्यतिष्यागस्त्य** ॥ 'ढे लोपोऽकद्र्वाः' इत्यतो लोप इत्यनुवर्तते । य इति षष्ठी, अङ्गस्येत्यधिकृतमवयवषष्ठ्यन्तम्, तच्च उपधायामन्वेति । अङ्गस्य उपधाभूतो यो यकारः तस्य लोपस्स्यादिति लभ्यते । सूर्यतिष्यागस्त्यमत्स्यानामित्यप्यवयवषष्ठ्यन्तं यकारेऽन्वेति, न त्वङ्गविशेषणम् । तदाह । **अङ्गस्येत्यादिना** ॥ **मत्स्यस्य ङ्यामिति** ॥

'तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्' (वा ४२००)। मत्सी। 'मातरि षिच्च' (वा २७१०) इति षित्त्वादेव सिद्धे गौरादिषु मातामहीशब्द-पाठादनित्यः षितां ङीष्। दंष्ट्रा।

## ५००। जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुक-कबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादना-योविकारमैथुनेच्छाकेशवेशेषु। (४-१-४२)

एकादशभ्यः प्रातिपदिकेभ्यः क्रमाद्वृत्त्यादिष्वर्थेषु ङीष्स्यात्। जानपदी वृत्तिश्चेत्, अन्या तु जानपदी। उत्सादित्वादञन्तत्वेन 'टिड्ढ—' (सू ४७०) इति ङीप्याद्युदात्तः। कुण्डी अमत्रं चेत्, कुण्डान्या। 'कुडि दाहे'।

तेनेह न, मत्स्यस्येदं मात्स्यम्। **सूर्यागस्त्ययोश्छे च ङ्याञ्चेति** ॥ सूरीयः। सूरी। अगस्तीयः। अगस्ती। नेह, सौर्यम्। आगस्त्यम्। **तिष्येति** ॥ 'नक्षत्रेण युक्तः कालः, सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इति च विहिते नक्षत्रसम्बन्धिनि अणि परतः तिष्यपुष्ययो-र्यलोपः इत्यर्थः। तत्र तिष्यस्य यलोपो नियम्यते। पुष्यस्य त्वप्राप्तो विधीयते। तिष्येण युक्तः पूर्णमासः, तिष्ये भवो वा तैषः। एवं पौषः। नेह। तिष्यस्य पुष्यस्य वाऽयं तैष्यः, पौष्यः। **मत्सीति** ॥ मत्स्यशब्दात् गौरादिङीषि यलोपः, 'यस्येति च' इत्यकारलोपः। ननु 'पितृव्यमातुलमातामहपितामहाः' इति सूत्रे मातुः पिता पितुः पितेति विग्रहे मातृपितृभ्यां डामहचि टिलोपे मातामहपितामहशब्दौ निपातितौ। तत्र मातुर्माता पितुर्मातेति विग्रहे डामहच्षित्वं विहितं 'मातरि षिच्च' इति। ततश्च षित्त्वविधानादेव ङीष् सिद्धेः गौरादिषु मातामहीशब्दपाठो न कर्तव्यः। नच 'मातरि षिच्च' इति न क्रियतामिति वाच्यम्। पितामहीत्यत्र ङीषर्थं तस्यावश्यकत्वादित्यत आह। **मातरीति** ॥ **दंष्ट्रेति** ॥ दंशेः 'दाम्नीशस' इति करणे ष्ट्रन्। अत्र षित्त्वे सत्यपि न ङीषिति भावः। सूर्यादीनामङ्गानामुपधा-भूतस्य यकारस्य लोप इति तु न व्याख्यातम्। तथा सति सौरी बलाकेति न सिध्येत्। सूर्येणैकदिक् इत्यर्थे 'तेनैकदिक्' इत्यणि तदन्तात् ङीपि अणन्तमङ्गम्, नतु सूर्यशब्द इति तदसिद्धिः। वचनन्तु सूरी कुन्तीत्यत्र चरितार्थमित्यन्यत्र विस्तरः। **जानपद** ॥ जानपदे-त्यादि कबरादित्यन्तमेकपदम्। समाहारद्वन्द्वात् पञ्चमी। **जानपदीति** ॥ जनपदे भवेत्यर्थः। **वृत्तिश्चेदिति** ॥ जीविका गम्या चेदित्यर्थः। ननु 'उत्सादित्वादञ्' इति ङीपैव सिद्धे ङीष्-विधिर्व्यर्थ इत्यत आह। **उत्सादित्वादिति** ॥ 'अनुदात्तौ सुप्पितौ' इति ङीप्याद्युदात्तत्वम्। ङीषि तु प्रत्ययस्वरेणान्तोदात्तत्वमिति भेद इत्यर्थः। **कुण्डीति** ॥ 'पिठरं स्थाल्युखा कुण्डम्' इत्यमरः। 'पात्रामत्रे च भोजनम्' इति च। कुण्डशब्दस्य स्त्रीत्वमपि ङीष्विधिसामर्थ्यात्। 'पिठरे तु न ना कुण्डम्' इति विश्वः। **कुण्डान्येति** ॥ दहनीयेत्यर्थः। तदेव विशदयति।

'गुरोश्च हलः' (सू ३२८०) इत्यप्रत्ययः। यस्तु 'अमृते जारजः कुण्डः' इति मनुष्यजातिवचनस्ततो जातिलक्षणो ङीष् भवत्येव। अमत्रे हि स्त्रीविषयत्वादप्राप्तो ङीष् विधीयते, न तु नियम्यते। गोणी आवपनं चेत्, गोणान्या। स्थली अकृत्रिमा चेत्, स्थलान्या। भाजी श्राणा चेत्, भाजान्या। नागी स्थूला चेत्, नागान्या। गजवाची नागशब्दः स्थौल्यगुणयोगादन्यत्र प्रयुक्त उदाहरणम्। सर्पवाची तु दैर्घ्यगुणयोगादन्यत्र प्रयुक्तः प्रत्युदाहरणम्। काली वर्णश्चेत्, कालान्या। नीली अनाच्छादनं चेत्, नीलान्या। नील्या रक्ता शाटीत्यर्थः। 'नील्या अन्वक्तव्यः' (वा २६८०) इत्यन्। अनाच्छादनेऽपि

**कुडि दाहे इति ॥ गुरोश्चेति ॥** गुरुमतो हलन्ताद्धातोः अप्रत्ययस्स्यात् भावकर्मणोः स्त्रियामिति तदर्थः। ननु 'अमृते जारजः कुण्डो मृते भर्तरि गोळकः' इति मनुष्यजातिविशेषवाची कुण्डशब्दोऽपि प्रत्युदाहरणं किन्न स्यादित्यत आह। **यस्त्विति ॥ जातिलक्षणः इति ॥** 'जातेरस्त्रीविषयात्' इति जातिनिमित्तक इत्यर्थः। ननु अमत्रेऽपि वाच्ये कुण्डशब्दात् जातिलक्षणङीषि सिद्धे तद्वचनं व्यर्थम्। नच अमत्र एव ङीषिति नियमार्थं तदिति वाच्यम्। एवं सति मनुष्यजातिविशेषवाचित्वे ङीषोऽनुपपत्तेरित्यत आह। **अमत्रे हि स्त्रीविषयत्वादिति ॥** 'जातेरस्त्रीविषयात्' इत्यनित्यस्त्रीलिङ्गात् ङीष् विहितः। अमत्रे कुण्डशब्दो नित्यस्त्रीलिङ्गः, 'पदान्तरं विना स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वम्' इति स्वीकारात्। 'कुण्डी कमण्डलौ जारात् पतिवत्नीसुते पुमान्' इति मेदिनीकोशाच्च। तथाच कुण्डशब्दात् जातिलक्षणङीषप्राप्त एव विधीयते, नतु नियम्यते। अतो मनुष्यजातिवाचित्वेऽपि ङीष् निर्बाध इति भावः। **आवपनश्चेदिति ॥** ओप्यते निक्षिप्यते अस्मिन्नित्यर्थे आङ्पूर्वाद्वपेर्ल्युट्। **गोणान्येति ॥** कस्याश्चिदिदन्नाम। **अकृत्रिमा चेदिति ॥** इदानीन्तनपुरुषपरिष्कृता भूमिः कृत्रिमा, तद्भिन्नेत्यर्थः। **स्थलान्येति ॥** कृत्रिमेत्यर्थः। "स्थलयोदकं परिगृह्णन्ति" इति यजुर्वेदे। **भाजीति ॥** भज्यते सेव्यते इति कर्मणि घञ्। 'घञजबन्ताः पुंसि' इति प्रायिकम्। **श्राणा चेदिति ॥** "यवागूरुष्णिका श्राणा' इत्यमरः। **भाजान्येति ॥** अश्राणेत्यर्थः। 'श्रा पाके' क्तः। संयोगादेरातो धातोर्यण्वतः' इति निष्ठानत्वम्, णत्वञ्च, पक्वेत्यर्थः। नागशब्दस्य स्थौल्ये क्वाप्यप्रसिद्धेराह। **गजवाचीति ॥ वर्णश्चेदिति ॥** वर्णः प्रवृत्तिनिमित्तश्चेदित्यर्थः। वर्णविशिष्टा चेति यावत्। अन्यथा कालशब्दस्य "गुणे शुक्लादयः पुंसि" इति पुंस्त्वापातात्। सूत्रे वर्णा इति च्छेदः। अर्शआद्यजन्ताट्टाप्। **कालान्येति ॥** क्रौर्ययुक्तेत्यर्थः। संज्ञाशब्दो वा। **अनाच्छादनश्चेदिति ॥** वस्त्रभिन्नं गवादिकमित्यर्थः। **नीलान्येति ॥** नन्वनाच्छादनस्य विशेष्यत्वे स्त्रीत्वानुपपत्तिः। पटीत्यस्य विशेष्यत्वेऽपि नीलवर्णवती पटीत्यर्थे ङीषः अप्रसक्तिरेव। 'नीलादोषधौ, प्राणिनि च' इति नियमस्य वक्ष्यमाणत्वादित्यत आह। **नील्या रक्तेति ॥** नील्या ओषध्या रागविशेषं प्राप्तेत्यर्थः। ननु कथमयमर्थो लभ्यत इत्यत आह। **नील्या अनिति ॥** 'तेन रक्तं रागात्, इत्यत्र इदं वार्तिकम्। नीलीशब्दादन्प्रत्यये

न सर्वत्र । किन्तु 'नीलादोषधौ' (वा २४५६) । नीली । 'प्राणिनि च' (वा २४५८) । नीली गौः । 'संज्ञायां वा' (वा २४५७) । नीली–नीला । कुशी अयोविकारश्चेत्, कुशान्या । कामुकी मैथुनेच्छा चेत्, कामुकान्या । कबरी केशानां सन्निवेशश्चेत्, कबरान्या । चित्रेत्यर्थः ।

## ५०१ । शोणात्प्राचाम् । (४-१-४३)

शोणी–शोणा ।

## ५०२ । वोतो गुणवचनात् । (४-१-४४)

उदन्ताद्गुणवाचिनो वा ङीष्स्यात् । मृद्वी–मृदुः । 'उतः' किम् ।

---

सति 'यस्येति च' इति लोपे नीलशब्दः, तस्य नीलीरक्तवाचकस्य विशेषणांशे ओषधिवाचकत्वसत्त्वात् 'नीलादोषधौ प्राणिनि च' इति नियमे सत्यपि ङीषः प्राप्तेस्तन्निवृत्त्यर्थमनाच्छादनग्रहणमिति भावः । ननु नीला कुण्डीत्यत्रापि अनाच्छादनत्वात् ङीष् स्यादित्याशङ्क्य आह । **अनाच्छादनेऽपीति** ॥ 'नीलादोषधौ, प्राणिनि च' इति वार्तिकमेतत् । नीलात् अनाच्छादनेऽपि भवन् ङीष् ओषधौ प्राणिनि चैव स्यात्, न त्वन्यत्रेत्यर्थः । एवञ्च नीला कुण्डीत्यादौ न ङीषिति भावः । 'संज्ञायां वा' इत्यपि वार्तिकम् । संज्ञायामुक्तविषये तदन्यत्रापि ङीष् वा स्यादित्यर्थः । **अयोविकारश्चेदिति** ॥ फाला इति प्रसिद्धः । **कुशान्येति** ॥ छन्दोगसूत्रे 'प्रस्तोता तु कुशाः कारयेद्यज्ञियस्य वृक्षस्य खदिरस्य दीर्घसत्रेष्वेके प्रादेशमात्रीः कुशपृष्ठास्त्वक्तस्समामज्जते' इति प्रसिद्धाः । **कामुकीति** ॥ कामयितुं शीलमस्या इति विग्रहे । 'लषपत' इत्यादिना कुमेरुकञ् । मैथुनेच्छावती चेदित्यर्थः । अर्शआद्यजन्ताट्टाप् । **कामुकान्येति** ॥ धनादीच्छावतीत्यर्थः । **शोणात् प्राचाम्** ॥ 'रोहितो लोहितो रक्तश्शोणः कोकनदच्छविः' इत्यमरः । 'वर्णानान्तणतिनितान्तानाम्' इति शोणशब्दः आद्युदात्तः अनुदात्तान्तः । 'अन्यतो ङीष्' इति नित्यं ङीषि प्राप्ते विकल्पार्थमिदम् । **वोतो गुणवचनात्** ॥ प्रातिपदिकादित्यनुवृत्तम्, वा उत इति च्छेदः । उतः गुणवचनस्य प्रातिपदिकस्य विशेषणात् तदन्तविधिः । तदाह । **उदन्तादिति** ॥ **वा ङीषिति** ॥ ङीबिति नात्रानुवर्तते । 'गुणवचनात् ङीषाद्युदात्तार्थः' इति वार्तिकादिति भावः । **मृद्वीति** ॥ मृदुशब्दात् ङीषि यण् । अत्र "सत्त्वे निविशतेऽपैति पृथक्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥" इति भाष्ये गुणलक्षणमुक्तम् । सत्त्वं द्रव्यं समवायिकारणं, तत्रैव निविशते समवैति यः स गुण इत्यन्वयः । द्रव्यमात्रसमवेत इति यावत् । मात्रपदात् सत्ताजातिर्व्यवच्छिद्यते । तस्याः द्रव्यगुणक्रियावृत्तित्वात् । अथ द्रव्यत्वे अतिव्याप्तिवारणाय आह । अपैतीति । कतिपयद्रव्यादपगच्छतीत्यर्थः । द्रव्यत्वस्य सर्वद्रव्यवृत्तित्वान्नातिव्याप्तिरिति भावः । एवमपि गोत्वे अतिव्याप्तिवारणाय आह । पृथग्जातिषु दृश्यते इति । पृथक् भिन्नाः जातयः येषां ते पृथग्जातयः, भिन्नजातीयद्रव्यवृत्तिरिति यावत् । गोत्वस्य गोजातीयेष्वेव सत्त्वात् भिन्नजाती-

शुचिः । 'गुणः–' इति किम् । आखुः । 'खरुसंयोगोपधान्न' (वा २४६०) । 'खरुः, पतिंवरा कन्या'। पाण्डुः ।

## ५०३ । बह्वादिभ्यश्च । (४-१-४५)

येषु अश्वादिष्वसत्त्वान्नातिव्याप्तिरिति भावः । एवमपि क्रियायामतिव्याप्तिवारणाय आह । आधेयश्चाक्रियाजश्चेति । आधीयते उत्पाद्यते इत्याधेयः उत्पाद्यः अक्रियाजः अनुत्पाद्यः । उत्पाद्यत्वानुत्पाद्यत्वाभ्यां द्विविध इति यावत् । गुणो नित्यानित्यभेदेन द्विविधो भवति । नित्यगतानां गुणानां नित्यत्वात्, अनित्यगतानामनित्यत्वात् । क्रियायास्तु सर्वस्या अप्युत्पाद्यत्वान्नातिव्याप्तिरिति भावः । एवमपि द्रव्ये अतिव्याप्तिः । तस्य अवयवद्रव्यसमवेतत्वात् विजातीयपार्थिवाद्यवयवेषु सत्त्वात् नित्यानित्यभेदसत्त्वाच्च । अत आह । असत्त्वप्रकृतिरिति । अद्रव्यस्वभाव इत्यर्थः । द्रव्यभिन्न इति यावत् । अत्र मात्रपदेन सत्ताजातेः, अपैतीत्यनेन द्रव्यत्वस्य, पृथग्जातिषु दृश्यते इत्यनेन गोत्वादिजातेश्च निरासात् तद्भिन्नत्वमिति लब्धम् । 'आधेयश्चाक्रियाजश्च' इत्यनेन क्रियानिरासात् क्रियाभिन्नत्वं लब्धम् । असत्त्वप्रकृतिः इत्यनेन द्रव्यस्य निरासात् द्रव्यभिन्नत्वं लब्धम् । तथाच जातिभिन्नत्वे सति क्रियाभिन्नत्वे सति समवेतत्वं गुणलक्षणं निष्कृष्टं वेदितव्यम । समवेतत्वाभावादभावनिरासः । अत्र "नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव" इति तार्किकाभिमतविशेषपदार्थाङ्गीकारे तद्भिन्नत्वमपि निवेश्यम् । 'आकडारादेका संज्ञा' इति सूत्रभाष्ये तु "समासकृदन्ततद्धितान्तसर्वनामजातिसङ्ख्यासंज्ञाशब्दव्यतिरिक्तमर्थवच्छब्दरूपं गुणवचनसंज्ञं भवति" इत्युक्तम् । तादिदं प्रकृतसूत्रभाष्यस्थलक्षणस्यास्योक्तस्य प्रपञ्चनपरं वेदितव्यम् । परन्तु आकडारसूत्रभाष्ये संख्याशब्दभिन्नत्वमप्युपात्तम् । तदप्युक्तलक्षणे निवेश्यम् । न चैवमपि मृदुपट्वादिशब्दानां गुणविशिष्टद्रव्यवाचित्वात् गुणवचनत्वाभाव इति वाच्यम् । गुणवचनेत्यन्वर्थसंज्ञया गुणोपसर्जनद्रव्यवाचित्वस्यैव विवक्षितत्वात् । एवञ्च रूपशब्दस्य न गुणवचनता, तस्य प्राधान्येन रूपवाचितया रूपवति प्रयोगाभावात् । रूपादिशब्दस्यापि गुणवचनशब्देन ग्रहणे "गुणवचनेभ्यो मतुपो लुगिष्टः" इत्यत्रापि रूपादिशब्दानां ग्रहणापत्तौ रूपो घटः इत्यादिप्रयोगापत्तेः । प्रपञ्चितश्चैतदरुणाधिकरणेऽस्माभिरध्वरमीमांसाकुतूहलवृत्तौ । **शुचिरिति** ॥ शुक्लेत्यर्थः । "शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डुराः" इत्यमरः । नच शुचिधातोः 'इगुपधात् कित्' इत्यौणादिके इप्रत्यये उत्पन्नस्य शुचिशब्दस्य आकडारसूत्रे भाष्ये कृदन्तस्य गुणवचनत्वपर्युदासादेवात्र ङीष् न भविष्यतीति वाच्यम् । उणादीनाम् अव्युत्पत्तिपक्षाश्रयणात् । **आखुरिति** ॥ मूषिकेत्यर्थः । आखोस्तु जातिविशिष्टद्रव्यवचनत्वादुक्तगुणवचनत्वाभावान्न ङीप् । 'खरुसंयोगोपधान्न' इति वार्तिकम् । खरुश्च संयोगोपधश्चेति समाहारद्वन्द्वः । खरुशब्दात् संयोगोपधाच्च 'वोतो गुणवचनात्' इति ङीप् नेत्यर्थः । खरुशब्दमप्रसिद्धत्वात् व्याचष्टे । **पतिंवरा कन्येति** ॥ पतिलाभोत्कण्ठावतीत्यर्थः । औत्कण्ठ्यलक्षणगुणोपसर्जनद्रव्यवाचितया गुणवाचित्वात् प्राप्तिः । **पाण्डुरिति** ॥ श्वेतेत्यर्थः । संयोगोपधत्वात् न ङीप् । **बह्वादिभ्यश्च** ॥ गुणवचनत्वादेव

एभ्यो वा ङीष्स्यात् । बह्वी–बहुः । 'कृदिकारादक्तिनः' (ग ५०) । रात्रिः–रात्री । 'सर्वतोऽक्तिन्नर्थादित्येके' (ग ५१) । शकटिः–शकटी । 'अक्तिन्नर्थात्' किम् । अजननिः । क्तिन्नन्तत्वादप्राप्ते विध्यर्थं पद्धतिशब्दो गणे पठ्यते । 'हिमकाषिहतिषु च' (सू ९९२) इति पद्भावः । पद्धतिः–पद्धती ।

## ५०४ । पुंयोगादाख्यायाम् । (४-१-४८)

या पुमाख्या पुंयोगात्स्त्रियां वर्तते ततो ङीष्स्यात् । गोपस्य स्त्री गोपी । 'पालकान्तान्न (वा २४६१) । गोपालिका । अश्वपालिका । 'सूर्याद्देवतायां

---

सिद्धे बहुग्रहणं व्यर्थमेवेति प्राञ्चः । वस्तुतस्तु अनुपदोदाहृताकडारसूत्रभाष्यरीत्या सङ्ख्यासंज्ञकशब्दानां गुणवचनत्वाभावात् अप्राप्तस्य ङीषो विधानार्थं बहुग्रहणमित्याहुः । **बह्वी–बहुरिति** ॥ वैपुल्यवाची बहुशब्दोऽयम् । त्रित्वादिसमनियतसङ्ख्याविशेषवाचित्वे तु एकवचनानुपपत्तेः । वैपुल्यवाचित्वेऽपि 'बहुगणवतुडति सङ्ख्या' इति सङ्ख्याशब्दत्वात् न गुणवचनत्वमिति न वैयर्थ्यमिति भावः । 'कृदिकारादक्तिनः' इति बह्वाद्यन्तर्गणसूत्रम् । कृतो य इकारस्तदन्तात् प्रातिपदिकात् ङीष् वा स्यात्, न तु क्तिन्नन्तादित्यर्थः । **रात्रिः–रात्रीति** ॥ 'राशदिभ्यां त्रिप्' इति राधातोरौणादिकस्त्रिप् । गुणवचनत्वाभावात् उदन्तत्वाभावाच्चाप्राप्ते वचनम् । 'सर्वतोऽक्तिन्नर्थादित्येके' इत्यपि बह्वाद्यन्तर्गणसूत्रमेव । कृदिकारान्तादकृदिकारान्तादपि ङीष् वा स्यात् । नतु क्तिन्नर्थकप्रत्ययान्तादित्यर्थः । **शकटिः–शकटीति** ॥ शकटिशब्दस्य अव्युत्पन्नप्रातिपदिकत्वात् कृदन्तत्वाभावात् सर्वत इति वचनम् । अव्युत्पत्तिपक्षे रात्रिशब्दोऽप्युदाहरणं बोध्यम् । **अजननिरिति** ॥ स्त्रियां क्तिन्' इत्यधिकारे 'आक्रोशे नञ्यनिः' इति नञि उपपदे जनेरनिप्रत्ययः, अक्तिन इत्युक्तौ अत्र निषेधो न स्यात् । अतः अक्तिन्नर्थादित्युक्तिरिति भावः । ननु हनधातोः स्त्रियां कर्मणि क्तिनि 'अनुदात्तोपदेश' इत्यादिना नलोपे हतिशब्दः, तस्य क्तिन्नन्तत्वात् कथं पद्धतिशब्दात् ङीषित्यत आह । **क्तिन्नन्तत्वादिति** ॥ **गणे इति** ॥ बह्वादिगण इत्यर्थः । ननु पादाभ्यां हतिरिति विग्रहे 'कर्तृकरणे कृता बहुलम्' इति तृतीयासमासे सुब्लुकि पाद हति इति स्थिते कथं पदादेशः, 'पादः पत्' इत्यत्र कृतसमासान्तलोपस्यैव पादशब्दस्य ग्रहणात् भत्वाभावाच्च 'पादस्य पदाज्यातिगोपहतेषु' इत्यपि न सम्भवति । तस्य आज्यादिष्वेव परेषु प्रवृत्तेरित्यत आह । **हिमकाषीति** ॥ हिमादिषु परेषु पादशब्दस्य पदादेशस्स्यादिति तदर्थः । **पुंयोगात्** ॥ पुंयोगादिति हेतौ पञ्चमी । आख्यायामिति पञ्चम्यास्सप्तम्यादेशः । 'सुपां स्थाने सुपो भवन्तीति वक्तव्यम्' इत्युक्तेः । आख्येत्यनेन वाचकशब्दो विवक्षितः, कस्य वाचकः इत्यपेक्षायां पुंयोगादित्युपस्थितत्वात् पुंस इति लभ्यते । तथाच आख्यायामित्यनेन पुंसि प्रसिद्धात् शब्दादिति लभ्यते । पुंयोगादिति स्त्रियामित्यत्रान्वेति । तथाच पुंयोगमाश्रित्य लक्षणया स्त्रियां वर्तमानादिति लभ्यते । तदाह । **या पुमाख्येत्यादिना** ॥ **ङीषिति** ॥ 'अन्यतो ङीष्' इत्यतस्तदनुवृत्तेरिति भावः । 'वोतो गुणवचनात्'

चाब्वाच्यः' (वा २४७१) । सूर्यस्य स्त्री देवता सूर्या । 'देवतायाम्' किम् । सूरी कुन्ती । मानुषीयम् ।

---

इति पूर्वसूत्रे तु 'गुणवचनात् ङीषाद्युदात्तार्थम्' इति वार्तिकात् ङीष् लब्ध इति न तत्रास्यानुवृत्तिः । **गोपस्य स्त्रीति** ॥ गाः पातीति गोपः, 'आतोऽनुपसर्गे कः' तज्जायायान्तु गोरक्षणाभावेऽपि तद्भार्यात्वात् तद्व्यपदेशः । ततश्च पुंयोगमाश्रित्य लक्षणया स्त्रियां वर्तमानत्वात् ङीषि 'यस्येति च' इत्यकारलोपः इति भावः । हरेः स्त्री, शम्भोः स्त्री, इत्यादौ न ङीष् । स्त्रीप्रत्ययविधिप्रकरणे अतः इत्यनुवृत्तेः । या तु स्वयमेव गाः पाति, नतु गोपस्य स्त्री, सा तु गोपा । तत्र गोपशब्दस्य स्वत एव स्त्रियां वृत्त्या पुंयोगादवृत्तेः । नच गोपस्य माता श्वश्रूः मातुलानी वा गोपीति स्यादिति वाच्यम् । अकुर्वती पापं भर्तृकृतान् वधबन्धादीन् यथा लभते एवं तच्छब्दमपीति भाष्यस्वारस्येन जायापत्यात्मकस्यैव पुंयोगस्य विवक्षितत्वात् । दुहितरि केकयी, देवकी, इत्यादयस्तु गौरादौ पाठ्या इति शब्देन्दुशेखरे स्थितम् । आख्याग्रहणं किम् । प्रसूता । अयं हिशब्दो जातप्रसवामाह । स च प्रसवः पुंयोगानिमित्तकः, तन्निमित्ता चास्य स्त्रियां वृत्तिः, न त्वयं पुंसि प्रसिद्धः, अतो न ङीष्, अत्र 'गोपालकादीनां प्रतिषेधः' इति वार्तिकम् । अत्र आदिपदेन अश्वपालिकेत्यादयः पालकान्ता एव गृह्यन्ते । भाष्ये तेषामेवोदाहरणात् । तदाह । **पालकान्तान्नेति** ॥ पुंयोगलक्षणङीषिति शेषः । **गोपालिकेति** ॥ गोपालकस्य स्त्रीत्यर्थः । ननु पालयतीति पालकः, कर्तरि ण्वुल्, 'युवोरनाकौ' इत्यकादेशः । 'णेरनिटि' इति णिलोपः । गवां पालकः इति विग्रहे षष्ठीसमासे सुपो लुकि गोपालकशब्दः । तत्र किं शेषषष्ठी उत 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी । न तावदाद्यः । प्रत्ययलक्षणमाश्रित्य टापस्समासावयवात् पालकशब्दात् उत्पन्नसुपः परत्वेन असुप इति निषेधात् 'प्रत्ययस्थात्' इति इत्त्वानुपपत्तेः । नचास्तु कर्मणि षष्ठीति द्वितीयः पक्षः । 'गतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक्सुबुत्पत्तेः' इति वचनेन सुबुत्पत्तेः प्रागेव पालकशब्देन प्रातिपदिकेन गवामिति षष्ठ्यास्समासे सति समासात् उत्पन्नस्य टापस्सुपः परत्वाभावेन इत्त्वस्य निर्बाधत्वादिति वाच्यम् । 'तृजकाभ्यां कर्तरि' इति 'कृद्योगलक्षणा षष्ठी न समस्यते' इति कारकषष्ठ्यास्समासनिषेधात् इति चेत् । मैवम् । गाः पालयतीति गोपालः । कर्मण्यण् । उपपदसमासः । गोपाल एव गोपालकः, स्वार्थिकः कः । तद्धितावयवत्वात् सुब्लुक् । गोपालकस्य स्त्री गोपालिकेति व्युत्पत्त्याश्रयणात् । नह्यत्र टाप् सुपः परः, केन व्यवधानात् । अस्तु वा शेषषष्ठ्या समासः । एवमपि न टाप् सुपः परः, शेषत्वविवक्षायामपि वस्तुतः कारकतया सुबुत्पत्तेः प्रागेव शेषषष्ठ्यास्समासप्रवृत्तेः । अत एव प्रकृतसूत्रे 'उपपदमतिङ्' इति सूत्रे च भाष्ये "कुम्भकारपदे सुबुत्पत्तेः प्रागेव कुम्भस्येति शेषषष्ठ्यास्समासः उपन्यस्तस्सङ्गच्छते" इति शब्देन्दुशेखरे प्रपञ्चितम् । **सूर्याद्देवतायामिति** ॥ देवताभूतायां स्त्रियां पुंयोगाद्वर्तमानात् सूर्यशब्दात् चाप् वक्तव्यः इत्यर्थः । 'पुंयोगात्' इति ङीषोऽपवादः । चपावितौ । **सूर्येति** ॥ चापि सवर्णदीर्घः । **देवतायां किमिति** ॥ सूर्यस्त्रियां देवतात्वाव्यभिचारात् प्रश्नः । **सूरी कुन्तीति** ॥ ङीषि 'सूर्यतिष्य' इति यकारलोपः, 'यस्येति च' इत्यकारलोपः । **मानुषीयमिति** ॥ इयं कुन्ती मानुषी,

**५०५ । इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् । (४-१-४९)**

एषामानुगागमः स्यान्ङीष्च । इन्द्रादीनां षण्णां मातुलाचार्ययोश्च पुंयोग एवेष्यते । तत्र ङीषि सिद्धे आनुगागममात्रं विधीयते । इतरेषां चतुर्णामुभयम् । इन्द्राणी । 'हिमारण्ययोर्महत्त्वे' (वा २४७२) । महद्धिमं हिमानी । अरण्यानी । 'यवाद्दोषे' (वा २४७३) । दुष्टो यवो यवानी । 'यवनाल्लिप्याम्' (वा २४७४) । यवनानां लिपिर्यवनानी । मातुलोपाध्यायोरानुग्वा । मातुलानी—मातुली । उपाध्यायानी—उपाध्यायी । या तु स्वयमेवाध्या-

न तु देवतेत्यर्थः । तच्च महाभारतादौ स्पष्टम् । नच "सूर्याद्देवतायान्न" इत्येवोच्यताम्, ङीषि निषिद्धे टापैव सूर्येति सिद्धेरिति वाच्यम, टापि हि सति पित्त्वादनुदात्तत्वम् । 'अनुदात्तौ सुप्पितौ' इत्युक्तेः । चापि तु 'चितः' इत्यन्तोदात्तत्वमिति भेदः । **इन्द्रवरुण** ॥ **आनुगागम इति** ॥ कित्त्वादागमलिङ्गादिति भावः । **ङीष् चेति** ॥ 'अन्यतो ङीष्' इत्यतस्तदनुवृत्तेरिति भावः । **पुंयोग एवेष्यते इति** ॥ पुंयोगादित्यनुवृत्तेः तेषां स्त्रीत्वे पुंयोगं विना अप्रवृत्तेश्चेति भावः । नन्वेवं पुंयोगादित्येव सिद्धे ङीष्विधिर्व्यर्थ इत्यत आह । **तत्रेति** ॥ तत्र इन्द्रादिषट्सु मातुलाचार्ययोश्च पुंयोगादित्येव ङीषि सिद्धे तत्सान्नियोगेन आनुगागममात्रं विधीयते इत्यर्थः । **इतरेषामिति** ॥ हिमारण्ययवयवनानान्तु आनुक् ङीष् चेत्युभयं विधीयते । तत्र पुंयोगस्यासम्भवादिति भावः । **इन्द्राणीति** ॥ आनुकि ककार इत्, उकार उच्चारणार्थः, कित्त्वादन्तावयवः, सवर्णदीर्घः, णत्वमिति भावः । वरुणानी, भवानी, शर्वाणी, रुद्राणी, मृडानी, इत्युदाहरणानि सुगमत्वात् उपेक्षितानि । दीर्घोच्चारणं विना अनुग्विधौ तु पररूपापत्तिः । अकारोच्चारणस्य अल्लोपनिवृत्त्या चरितार्थत्वात् । नुग्विधौ तु अल्लोपापत्तिरित्यन्यत्र विस्तरः । **हिमारण्ययोर्महत्त्वे** इति वार्तिकम् । महत्त्वविशिष्टे हिमे अरण्ये च वर्तमानयोरानुङ्ङीषावित्यर्थः । **महद्धिमं हिमानीति** ॥ महत्त्वयोगे स्त्रीत्वमत एव ज्ञेयम् । **अरण्यानीति** ॥ महदरण्यमित्यर्थः । 'यवाद्दोषे' इति वार्तिकम् । आनुङ्ङीषाविति शेषः । दुष्टयवे वृत्तौ स्त्रीत्वमत एव ज्ञेयम् । **यवनाल्लिप्याम्** इत्यपि वार्तिकम् । लिपिरक्षरविन्यासः । तत्र लक्षणया वृत्तौ आनुङ्ङीषावित्यर्थः । **मातुलोपाध्याययोरानुग्वेति** ॥ इदमपि वार्तिकम् । अत्र पुंयोगादिति सम्बध्यते । हिमादिष्विवात्र असम्भवाभावात् । अत्र आनुगेव तु विकल्प्यते, आनुगभावेऽपि पक्षे ङीष् भवत्येव । मातुलान्नित्यं प्राप्ते उपाध्यायादप्राप्ते विभाषेयम् । **मातुलानी—मातुलीति** ॥ मातुलस्य स्त्रीत्यर्थः । **उपाध्यायानी—उपाध्यायीति** ॥ उपाध्यायस्य स्त्रीत्यर्थः । **या तु स्वयमेवेति** ॥ इदन्तु वार्तिकं तृतीयस्य तृतीये 'इङश्च' इति सूत्रे पठितम् । या स्वयमेव अध्यापयति न तूपाध्यायस्य स्त्री, तत्र पुंयोगाभावेऽपि केवलङीष्विकल्पो वाच्य इत्यर्थः । युगान्तरे ब्रह्मवादिन्यः स्त्रियस्सन्ति, तद्विषय-

पिकाँ तत्र वा ङीष् वाच्यः । उपाद्ध्यायी—उपाद्ध्याया । 'आचार्यादणत्वं च' (वा २४७७) । आचार्यस्य स्त्री आचार्यानी । पुंयोग इत्येव । आचार्या, स्वयं व्याख्यात्री । 'अर्यक्षत्रियाभ्यां वा' (वा २४७८) । अर्याणी—अर्या । स्वामिनी वैश्या वेत्यर्थः । क्षत्रियाणी—क्षत्रिया । पुंयोगे तु, अर्यी । क्षत्रियी । कथं 'ब्रह्माणी' इति । ब्रह्माणमानयति जीवयतीति । 'कर्मण्यण्' (सू २९१३) ।

## ५०६ । क्रीतात्करणपूर्वात् । (४-१-५०)

क्रीतान्तादद्न्तात्करणादेः स्त्रियां ङीष्स्यात् 'वस्त्रक्रीती । 'क्वचिन्न' धनक्रीता ।

मिदम् । "पुरा युगेषु नारीणां मौञ्जीबन्धनमिष्यते । अद्ध्यापनञ्च वेदानां सावित्रीवचनन्तथा ॥" इति स्मरणात् । **आचार्यादणत्वञ्च** इत्यपि वार्तिकम् । चकारः आनुङ्ङीषोस्समुच्चयार्थः । **आचार्यानीति** ॥ आचार्यस्य स्त्रीत्यर्थः । 'अट्कुप्वाङ्' इति णत्वं न भवति । "उपनीय तु यश्शिष्यं वेदमध्यापयेत्तु यः । सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते ॥" 'एकदेशमुपाध्यायम्' इति स्मृतिः । **पुंयोग इत्येवेति** ॥ पुंयोगग्रहणमनुवर्तत एवेत्यर्थः । तत्प्रयोजनमाह । **आचार्येति** ॥ अत्र पुंयोगाभावं विशदयति । **स्वयं व्याख्यात्रीति** ॥ धर्मोपदेष्ट्रीत्यर्थः । 'यस्माद्धर्मानाचिनोति स आचार्यः' इति स्मरणादिति भावः । **अर्यक्षत्त्रियाभ्यां वा** इति वार्तिकम् । आनुङ्ङीषाविति शेषः । स्वार्थ इति व्याख्यानलभ्यम्, तेन पुंयोगनिरासः, अत एव भाष्ये 'अर्याणी—अर्या' इत्येवोक्तम् । पुंयोग एव प्रवृत्तौ तु उपाध्यायीतिवत् अर्यीति ङीषमेवोदाहरेत् । अर्यशब्दं व्याचष्टे । **स्वामिनी, वैश्या वेत्यर्थ इति** ॥ 'अर्यः स्वामिवैश्ययोः' इति निपातनादिति भावः । **क्षत्त्रियाणी—क्षत्त्रियेति** ॥ क्षत्त्रियात् क्षत्त्रियायां भार्यायामुत्पन्नेत्यर्थः । 'सवर्णेभ्यस्सवर्णासु जायन्ते हि सजातयः' इत्युपक्रम्य 'विन्नास्वेष्वधिस्मृतः' इति स्मरणात् । विन्नास्वित्यस्य ऊढास्वित्यर्थः । **पुंयोगे तु अर्यी क्षत्त्रियीति** ॥ अर्यस्य स्त्री अर्यी, क्षत्त्रियस्य स्त्री क्षत्त्रियी, वैश्या शूद्रा वेत्यर्थः । **कथमिति** ॥ 'इन्द्रवरुण' इत्यादिसूत्रे ब्रह्मन्शब्दस्य अग्रहणात् ब्रह्मणः स्त्रीत्यर्थे ब्रह्माणीत्यानुङ्ङीषौ कथमिति प्रश्नः । उत्तरमाह । **ब्रह्माणमिति** ॥ आनयतीत्यस्य व्याख्यानं जीवयतीति । अन प्राणने, प्राणनं जीवनम्, अस्माद्धातोर्हेतुमण्णिचि उपधावृद्धौ तिपि शपि गुणायादेशयोः आनयतीति रूपम् । भर्तृजीवनस्य जायासौमङ्गल्यायत्तत्वात् । ततश्च ब्रह्माणमानयतीति विग्रहे आनि इति ण्यन्तात् 'कर्मण्यण्' इति अणि 'णेरनिटि' इति णिलोपे आनशब्देन ब्रह्माणमित्यस्य उपपदसमासे सुब्लुकि सवर्णदीर्घे ब्रह्मानशब्दात् 'टिड्ढाणञ्' इति ङीपि 'यस्येति च' इत्यकारलोपे 'पूर्वपदात् संज्ञायाम्' इति णत्वे ब्रह्माणीति रूपमिति भावः । 'एकाजुत्तरपदे' इति तु न । अणि सति प्रातिपदिकस्य द्व्यच्कत्वात् । लुप्तेऽप्याणि लोपस्य स्थानिवत्त्वात् । पूर्वत्रासिद्धीये न स्थानिवत्' इति तु न । 'तस्य दोषः' इत्युक्तेः । **क्रीतात्करणपूर्वात्** ॥ प्रातिपदिकादित्यनुवृत्तम् अत इत्यनुवृत्तेन क्रीतादित्यनेन च विशेष्यते, तदन्तविधिः । तदाह । **क्रीतान्ता-**

## ५०७ । क्तादल्पाख्यायाम् । (४-१-५१)

करणादेः क्तान्तादन्तात्स्त्रियां ङीष्स्यादल्पत्वे द्योत्ये । अभ्रलिप्ती द्यौः । 'अल्पाख्यायाम्' किम् । चन्दनलिप्ता अङ्गना ।

## ५०८ । बहुव्रीहेश्चान्तोदात्तात् । (४-१-५२)

बहुव्रीहेः क्तान्तादन्तोदात्तादन्तात्स्त्रियां ङीष्स्यात् । 'जातिपूर्वादिति वक्तव्यम्' (वा २४८४) । तेन 'बहुनञ्सुकालसुखादिपूर्वान्न' ऊरुभिन्नी ।

---

**दित्यादिना** ॥ करणमादिर्यस्येति विग्रहः । प्रातिपदिकशब्दो विशेष्यम्, तेन करणादेरिति पुंस्त्वमुपपन्नम् । **वस्त्रक्रीतीति** ॥ ननु वस्त्रेण क्रीतेति टाबन्तेन विग्रहे 'कर्तृकरणे कृता बहुळम्' इति समासात्मकं प्रातिपदिकम् आदन्तमेव, न त्वदन्तमिति कथमत्र ङीषिति चेत्, सत्यम् । समासस्य तावदलौकिकविग्रहवाक्यं प्रकृतिः । वस्त्र भिस् क्रीत इति स्थिते 'गतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक् सुबुत्पत्तेः' इति परिभाषया सुबुत्पत्तेः प्रागेव क्रीतशब्देन समासे 'सुपो धातु' इति सुब्लुकि वस्त्रक्रीतेति प्रातिपदिकस्य अदन्तत्वन्निर्बाधमिति भावः । एतच्च 'पुंयोगादाख्यायाम्' इति सूत्रे भाष्ये स्पष्टम् । तर्हि धनक्रीतेत्यत्रापि ङीष् स्यादित्यत आह । **क्व चिन्नेति** ॥ 'कर्तृकरणे कृता बहुळम्' इति बहुळग्रहणेन 'गतिकारकोपपदानाम्' इत्यस्य क्वचिदप्रवृत्त्यवगमादिह सुबन्तेन समासः । तत्र च सुपः प्रागेवान्तरङ्गत्वात् टापि सति ततस्सुपि टाबन्तप्रकृतिकसुबन्तेन समासे सुब्लुकि धनक्रीताशब्दस्य अदन्तत्वाभावान्न ङीषित्यर्थः । एवञ्च अत इत्यनुवृत्तेरेतत्प्रयोजनमित्युक्तं भवति । एतच्च 'उपपदमतिङ्' इत्यत्र कैयटे स्पष्टम् । करणपूर्वात् किम् । सुक्रीता । नचैवमपि वस्त्रेण क्रीतेति वाक्यात् ङीष्प्रसङ्गः । क्रीतेति प्रातिपदिकस्य करणपूर्वत्वात् अदन्तत्वाच्चेति वाच्यम् । करणपूर्वादिति हि क्रीतान्तस्य प्रातिपदिकस्य विशेषणम्, नतु क्रीतशब्दस्य । करणं पूर्वं यस्मिन् इति बहुव्रीहिः । करणशब्दात्मकपूर्वावयवात् क्रीतान्तसमासप्रातिपदिकादित्यर्थः । एतदर्थमेव पूर्वग्रहणम् । अन्यथा क्रीतात्करणादित्येवावक्ष्यदित्यलम् । **क्तादल्पाख्यायाम्** ॥ **करणादेरिति** ॥ करणपूर्वादित्यनुवृत्तेरिति भावः । **क्तान्तादिति** ॥ क्तान्तान्तादित्यर्थः । प्रत्ययग्रहणपरिभाषालब्धक्तान्तेन प्रातिपदिकस्य विशेषणात् । **अदन्तादिति** ॥ अत इत्यनुवृत्तेरिति भावः । **अल्पत्वे द्योत्ये इति** ॥ अल्पाख्यायामिति समुदायोपाधिः । अल्पत्वं करणगतं क्रियागतं वा । **अभ्रलिप्ती द्यौरिति** ॥ अभ्रैरल्पैराच्छन्नेत्यर्थः । अभ्रैरीषदाच्छन्नेति वा । **बहुव्रीहेश्च** ॥ क्तादिति अत इति चानुवर्तते । तदाह । **बहुव्रीहेरिति** ॥ **क्तान्तादिति** ॥ क्तान्तान्तादित्यर्थः । **तेनेति** ॥ जातिपूर्वादिति विशेषणेन बह्वादिपूर्वान्न ङीष् इत्यर्थः । 'सुखादिभ्यः कर्तृवेदनायाम्' इत्यत्र सुखादिगणः पठितः । "जातिकालसुखादिभ्योऽनाच्छादनात् क्तो कृतमितप्रतिपन्नाः" इति 'नञ्सुभ्याम्' इति, बहोर्नञ्वदुत्तरपदभूम्नि' इति च, क्तान्तबहुव्रीहावन्तोदात्तविधायकानि । अत्र जातिपूर्वादित्युक्तेर्बह्वादिपूर्वस्यान्तोदात्तत्वेऽप्यर्थात् पर्युदास इति भावः । **ऊरुभिन्नीति** ॥ ऊरू भिन्नौ असंयुक्तौ

नेह बहुक्रीता । 'जातान्तान्न' (वा २४७९) । दन्तजाता । 'पाणिगृहीती भार्यायाम्' (वा २४८०) । पाणिगृहीता अन्या ।

## ५०९ । अस्वाङ्गपूर्वपदाद्वा । (४-१-५३)

पूर्वेण नित्ये प्राप्ते विकल्पोऽयम् । सुरापीती—सुरापीता । 'अन्तोदात्तात्' किम् । वस्त्रच्छन्ना । 'अनाच्छादनात्' इत्युदात्तनिषेधः । अत एव पूर्वेणापि न ङीष् ।

## ५१० । स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् । (४-१-५४)

यस्या इति विग्रहः । 'निष्ठा' इति भिन्नशब्दस्य पूर्वनिपातस्तु न भवति । जातिकालसुखादिभ्यः परा निष्ठा वाच्या' इति वार्तिकात् । 'जातिकालसुखादिभ्यः' इत्यादिसूत्रेणान्तोदात्तमिदम् । जातिलक्षणन्तु 'जातेरस्त्रीविषयात्' इत्यत्र वक्ष्यते । **बहुक्रीतेति** ॥ बहवः क्रीताः ययेति विग्रहः । अकृता, मासयाता, सुखयाता, दुःखयाता, इति च भाष्ये प्रत्युदाहृतम् । **जातान्तान्न** इति वार्तिकम् । 'बहुव्रीहेश्च' इत्युक्तो ङीष् नेत्यर्थः । **दन्तजातेति** ॥ दन्ताः जाताः यस्या इति विग्रहः । ऊरुभिन्नीतिवत् परनिपातः । **पाणिगृहीती भार्यायामिति** ॥ इदमपि वार्तिकम् । विधिवदूढा भार्या, तस्यां विद्यमानादेव पाणिगृहीतशब्दात् ङीषित्यर्थः। विवाहकाले विधिवत् पाणिः गृहीतो यस्या इति विग्रहः । **पाणिगृहीतान्येति** ॥ दास्यादिरित्यर्थः । **अस्वाङ्गपूर्वपदाद्वा** ॥ स्वाङ्गलक्षणमुत्तरसूत्रे वक्ष्यते । अस्वाङ्गं यत् पूर्वपदं तस्मात् परं यत् क्तान्तं तदन्तात् बहुव्रीहेर्ङीष् वा स्यात् इति सूत्रार्थः । यद्यपि अस्वाङ्गं पूर्वपदं यस्य तस्मात् क्तान्तबहुव्रीहेरित्यपि व्याख्यातुं शक्यम् । तथापि उत्तरसूत्रे अस्वाङ्गपूर्वपदादित्यनुवृत्तस्य कर्मधारयसमासाश्रयणात् इहापि तथा व्याख्यानमुचितम् । ननु बहुकृता अकृता इत्यादावपि अस्वाङ्गपूर्वपदक्तान्तबहुव्रीहित्वात् ङीष्विकल्पस्स्यादित्याशङ्क्य आह । **पूर्वेणेति** ॥ 'बहुव्रीहेश्चान्तोदात्तात्' इति पूर्वसूत्रेण नित्यं ङीषि प्राप्ते तद्विकल्पोऽत्र विधीयते इत्यर्थः । एवञ्च जातिपूर्वादित्यस्य अन्तोदात्तादित्यस्य च इहापि सम्बन्धात् बहुकृता इत्यादौ नातिप्रसङ्ग इति भावः । **सुरापीती—सुरापीतेति** ॥ सुरा पीता ययेति विग्रहः । ऊरुभिन्नीतिवत् पूर्वनिपातः । **अन्तोदात्तात् किमिति** ॥ 'बहुव्रीहेश्च' इत्यत्र श्रुतं 'अस्वाङ्गपूर्वपदाद्वा' इत्यत्रानुवृत्तमपि अन्तोदात्तादित्येतत् किमर्थमिति प्रश्नः । **वस्त्रच्छन्नेति** ॥ ऊरुभिन्नीतिवत् पूर्वनिपातः । अथ वस्त्रच्छन्नेत्यत्र 'जातिकालसुखादिभ्यः' इत्यन्तोदात्तत्वमाशङ्क्य निरस्यति । **अनाच्छादनादिति** ॥ तथाच बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरे शेषनिघातेन अनुदात्तान्तमेतादिति भावः । **अत एवेति** ॥ 'अस्वाङ्गपूर्वपदात्' इत्यनेन 'बहुव्रीहेश्च' इति पूर्वसूत्रेण च वस्त्रच्छन्नेत्यत्र वैकल्पिको नित्यश्च ङीष् नेत्यर्थः । अन्तोदात्तत्व एवोभयोः प्रवृत्तिरिति भावः । **स्वाङ्गाच्च** ॥ उपसर्जनादिति असंयोगोपधादिति च स्वाङ्गादित्यत्रान्वेति । स्वाङ्गादित्येतत् अत इत्यनुवृत्तञ्च प्रातिपदिकादित्यनुवृत्तस्य

असंयोगोपधमुपसर्जनं यत्स्वाङ्गं तदन्तादन्तात्प्रातिपदिकाद्वा ङीष्। केशानतिक्रान्ता अतिकेशी--अतिकेशा। चन्द्रमुखी—चन्द्रमुखा। संयोगोपधात्तु सुगुल्फा। 'उपसर्जनात्' किम्। शिखा। स्वाङ्गं त्रिधा।

अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्।[1]

सुस्वेदा, द्रवत्वात्। सुज्ञाना, अमूर्तत्वात्। सुमुखा शाला, अप्राणिस्थत्वात्। सुशोफा, विकारजत्वात्।

---

विशेषणम्, तदन्तविधिः। तदाह। **असंयोगोपधमित्यादिना**॥ **वा ङीषिति**॥ 'अस्वाङ्गपूर्वपदाद्वा' इत्यतः वेति 'अन्यतो ङीष्' इत्यतः ङीषित्यस्य चानुवृत्तेरिति भावः। बहुव्रीहेरित्यनुवर्तमाने उपसर्जनग्रहणं किमर्थमित्याशङ्क्य परिहरति। **केशानतिक्रान्तेति**॥ 'अत्यादयः क्रान्ताद्यर्थे' इति समासस्तत्पुरुषः। अत्र बहुव्रीहित्वाभावेऽपि प्राप्त्यर्थमुपसर्जनग्रहणमिति भावः। 'एकविभक्ति चापूर्वनिपाते' इति केशशब्दस्य उपसर्जनत्वम्। **चन्द्रमुखी—चन्द्रमुखेति**॥ चन्द्र इव मुखं यस्या इति विग्रहः। **सुगुल्फेति**॥ सु शोभनौ गुल्फौ यस्या इति विग्रहः। 'पदंघ्रिश्चरणोऽस्त्रियाम्'। 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः। **उपसर्जनात् किमिति**॥ केवलकेशादिशब्दानां अनुपसर्जनानां स्त्रीत्वविरहादेवाप्राप्तेः प्रश्नः। **शिखेति**॥ अत्र स्वाङ्गान्तत्वात् केवलशिखाशब्दात् ङीष्निवृत्त्यर्थमुपसर्जनग्रहणमित्युक्तम्। अन्यथा टापं बाधित्वा पक्षे ङीष् स्यादिति भावः। शोभना शिखा सुशिखेति क्वचित् पुस्तकेषु दृष्टम्, तत् प्रक्षिप्तं वेदितव्यम्। टाबन्तेन समासे अनदन्तत्वादेव प्राप्तिविरहात्। ननु स्वस्य अवयवीभूतस्य अङ्गं स्वाङ्गम्। तथा च सुमुखा शालेत्यादावतिव्याप्तिः, तत्र मुखशब्दार्थस्य प्रथमभागस्य अवयवीभूतशालाङ्गत्वात्। किञ्च सुकेशी रथ्येत्यत्राव्याप्तिः। तत्र केशानां रथ्याङ्गत्वाभावादित्यत आह। **स्वाङ्गं त्रिधेति**॥ "अद्रवम्मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्। अतत्स्थं तत्र दृष्टञ्च तेन चेत्तत्तथा युतम्" इति भाष्ये त्रिधा निरुक्तं पारिभाषिकं स्वाङ्गमिह विवक्षितमित्यर्थः। तत्र प्रथमार्धे प्रथमं स्वाङ्गलक्षणमित्यभिप्रेत्य विच्छिद्य पठति। **अद्रवमिति**॥ न विद्यते द्रवः यस्य तत् अद्रवम्। मूर्तिः अवयवसंयोगः अस्यास्तीति मूर्तिमत्, अवयवसंयोगासमवायिकारणं द्रव्यमिति यावत्। प्राणिनि प्राणवति जन्तौ विद्यमानं प्राणिस्थम्। अविकारजं रोगादिविकाराजन्यञ्च यत् तत् प्रथमं स्वाङ्गमित्यर्थः। अद्रवमित्यस्य प्रयोजनमाह। **सुस्वेदेति**॥ सु शोभनः स्वेदः घर्मजः उदकप्रस्रवः यस्याः इति विग्रहः। स्वेदस्य शोभनत्वन्तु दुर्गन्धाभावः। **द्रवत्वादिति**॥ न स्वाङ्गत्वमिति शेषः। अतो न ङीषित्यर्थः। मूर्तिमदित्यस्य प्रयोजनमाह। **सुज्ञानेति**॥ सु शोभनं ज्ञानं यस्या इति विग्रहः। **अमूर्तत्वादिति**॥ न स्वाङ्गत्वमिति शेषः। प्राणिस्थमित्यस्य प्रयोजनमाह। **सुमुखा शालेति**॥ सु शोभनं मुखं प्रथमभागः यस्या इति विग्रहः। **अप्राणिस्थत्वादिति**॥ न स्वाङ्गत्वमिति शेषः। अविकारजमित्यस्य प्रयोजनमाह। **सुशोफेति**॥ सु अधिकः शोफः श्वयथुः यस्या इति

---

१. भाष्योक्तमिदम्।

अतत्स्थं तत्र दृष्टं च—
सुकेशी—सुकेशा वा रथ्या । अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् ।
—तेन[2] चेत्तत्तथायुतम्' ॥
सुस्तनी--सुस्तना वा प्रतिमा । प्राणिवत्प्राणिसदृशे स्थितत्वात् ।

## ५११ । नासिकोदरोष्ठजङ्घादन्तकर्णश्रृङ्गाच्च । (४-१-५५)

एभ्यो वा ङीष्स्यात्, आद्ययोर्बह्वज्लक्षणो निषेधो बाध्यते, पुरस्तादपवादन्यायात् । ओष्ठादीनां पञ्चानां तु 'असंयोगोपधात्' इति पर्युदासे प्राप्ते

विग्रहः । "शोफस्तु श्वयथुः" इत्यमरः । **विकारजत्वादिति** ॥ रोगजत्वादित्यर्थः । न स्वाङ्गत्वमिति शेषः । **अतत्स्थं तत्र दृष्टञ्चेति** ॥ द्वितीयं स्वाङ्गलक्षणम् । तच्छब्देन प्राणी परामृश्यते । अतत्स्थं अप्राणिस्थं तत्र प्राणिनि दृष्टं यत् तदपि स्वाङ्गमित्यर्थः । **रथ्येति** ॥ रथ्यास्थानां केशानां प्राणिस्थत्वाभावात् पूर्वलक्षणेन स्वाङ्गत्वासिद्धेर्लक्षणान्तरमिति भावः । उक्तलक्षणमुदाहरणे योजयति । **अप्राणिस्थस्यापीति** ॥ इदानीं प्राणिस्थत्वाभावेऽपि कदा चित् प्राणिस्थत्वादपि स्वाङ्गत्वमित्यर्थः । **तेन चेत्तत्तथा युतमिति** ॥ तृतीयं स्वाङ्गलक्षणम् । अत्र भाष्ये 'स्वाङ्गमप्राणिनोऽपि' इति शेषः पूरितः । चेदिति यद्यर्थे । तेन प्राणिस्थेन स्तनाद्यङ्गाकृतिकावयवविशेषेण तत् अप्राणिद्रव्यं प्रतिमादि तथा प्राणिद्रव्यवत् युतं सम्बद्धं यदि तदा तत् स्तनाद्याकृतिकं अप्राणिनोऽपि स्वाङ्गमित्यर्थः । **सुस्तनी सुस्तना वा प्रतिमेति** ॥ सु शोभनौ स्तनौ स्तनाकृती अवयवौ यस्या इति विग्रहः । प्रतिमागतयोः स्तनाकृतिकावयवयोः कदा चिदपि प्राणिस्थत्वाभावात् प्राण्यन्तरे अदृष्टत्वाच्च पूर्वलक्षणद्वयस्याप्यप्रवृत्तेर्लक्षणान्तरमिदम् । अथोदाहरणे लक्षणं योजयति । **प्राणिवदिति** ॥ सप्तम्यन्ताद्वतिः । प्राणिवत् प्राणिसदृशे प्रतिमादिद्रव्ये स्थितत्वात् स्वाङ्गमित्यर्थः । नच कल्याणपाणिपादेति बहुव्रीहावपि ङीष् स्यादिति वाच्यम् । 'अस्वाङ्गपूर्वपदाद्वा' इत्यनुवृत्तेः । अत्र हि पाणिपादेति समुदायो न स्वाङ्गम्, किन्तु स्वाङ्गसमुदाय एव । यत्तु स्वाङ्गं पादेति ननु तत् स्वाङ्गात् पूर्वपदात् परम्, पाणिपदेन व्यवधानात् । तथाच स्वाङ्गस्य पादस्य अस्वाङ्गात् पूर्वपदात् कल्याणशब्दात् परत्वाभावान्न ङीषिति भाष्ये स्पष्टम् । **नासिकोदरोष्ठजङ्घादन्तकर्णश्रृङ्गाच्च** ॥ 'अस्वाङ्गपूर्वपदाद्वा' इत्यतो वेति 'अन्यतो ङीष्' इत्यतो ङीषिति चानुवर्तते । तदाह । **एभ्य इति** ॥ उपसर्जनभूतनासिकादिशब्दान्तेभ्य इत्यर्थः । पूर्वसूत्रादुपसर्जनादित्यनुवृत्तेः । ननु 'स्वाङ्गाच्च' इति पूर्वसूत्रेणैव सिद्धे किमर्थमिदमित्यत आह । **आद्ययोरिति** ॥ नासिकोदरशब्दयोर्विषये 'न क्रोडादिबह्वचः' इति निषेधः प्राप्तः, सः अनेन ङीष्विकल्पविधिना बाध्यते इत्यर्थः । बह्वज्लक्षणनिषेधस्तु सुजघनेत्यादौ सावकाश इति भावः । ननु सहनासिका, अनासिका, सहोदरा, अनुदरा, इत्यत्र 'सहनञ्विद्यमानपूर्वाच्च' इति निषेधोऽपि अनेन बाध्यताम् । 'सहनञ्' इत्यस्य सकेशा अकेशा इत्यादौ सावकाशत्वादित्यत आह । **पुरस्ता-**

---

१-२. भाष्योक्तमिदम् ।

वचनं मध्येऽपवादन्यायात् । सहनञ्लक्षणस्तु प्रतिषेधः परत्वादस्य बाधकः । तुङ्गनासिकी--तुङ्गनासिकेत्यादि । नेह । सहनासिका । अनासिका । अत्र वृत्तिः । 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' । स्वङ्गी--स्वङ्गेत्यादि । एतच्चानुक्तसमुच्चयार्थेन चकारेण संग्राह्यमिति केचित् । 'भाष्याद्यनुक्तत्वादप्रमाणम्' इति प्रामाणिकाः । अत्र वार्तिकानि । 'पुच्छाच्च' (वा २४८९) । सुपुच्छी--सुपुच्छा । 'कबरमणिविषशरेभ्यो नित्यम्' (वा २४९०) । कबरं चित्रं पुच्छं यस्याः सा कबरपुच्छी मयूरीत्यादि । 'उपमानात्पक्षाच्च पुच्छाच्च' (वा २४९१) । नित्यमित्येव । उलूकपक्षी शाला । उलूकपुच्छी सेना ।

---

**दिति** ॥ 'पुरस्तादपवादाः अनन्तरान्विधीन् बाधन्ते नोत्तरान्' इति न्यायात् इत्यर्थः । ततश्च 'सहनञ्' इति निषेधो न क्रोडादिसूत्रेण व्यवहितत्वात् 'नासिकोदर' इत्यनेन बाधं नार्हतीत्यर्थः। ओष्ठादिपञ्चकस्य प्रयोजनमाह । **ओष्ठादीनामिति** ॥ सुगुल्फेत्यादौ असंयोगोपधादित्यस्य सावकाशत्वादिति भावः । ननु सहोष्ठा, अनोष्ठा, इत्यादौ 'सहनञ्' इति निषेधोऽप्यनेन बाध्यतामित्यत आह । **मध्येऽपवादेति** ॥ 'मध्येऽपवादाः पूर्वान्विधीन् बाधन्ते नोत्तरान्' इति न्यायादित्यर्थः । ननु 'नासिकोदर' इति ङीष्विकल्पस्तु तुङ्गनासिकी इत्यादौ सावकाशः । 'सहनञ्' इति निषेधस्तु सहकेशेत्यादौ सावकाशः, सहनासिकेत्यादौ तु उभयप्राप्तौ कतरस्य बाध इत्यत आह । **सहनञ्लक्षणस्त्विति** ॥ **अस्येति** ॥ 'नासिकोदर' इति ङीष्विकल्पविधेरित्यर्थः । **तुङ्गनासिकी-तुङ्गनासिकेति** ॥ 'न क्रोडादिबह्वचः' इति बह्वज्लक्षणङीष्निषेधं बाधित्वा 'नासिकोदर' इति विकल्पः । **इत्यादीति** ॥ कुम्भोदरी–कुम्भोदरा । अत्र बह्वज्लक्षणनिषेधं बाधित्वा ङीष्विकल्पः । बिम्बोष्ठी–बिम्बोष्ठा । सुजङ्घी–सुजङ्घा । शुभ्रदन्ती–शुभ्रदन्ता । सुकर्णी–सुकर्णा । सुश्रृङ्गी–सुश्रृङ्गा । ओष्ठादिषु संयोगोपधत्वेऽपि ङीष्विकल्पः । **नेह सहनासिकेति** ॥ सहशब्दो विद्यमानवचनः, सह नासिका यस्या इति विग्रहः । अविद्यमाना नासिका यस्या इति च विग्रहः । इह उभयत्रापि 'सहनञ्विद्यमान' इति ङीष्निषेधः, नतु 'नासिकोदर' इति ङीष्विकल्प इत्यर्थः । **वक्तव्यमिति** ॥ वा ङीषिति शेषः । संयोगोपधत्वाद्वचनम् । **स्वङ्गीति** ॥ सु शोभनानि अङ्गानि यस्या इति विग्रहः । सुगात्री–सुगात्रा । सुकण्ठी–सुकण्ठा । वृत्तिग्रन्थस्य मूलं दर्शयति । **एतच्चेति** ॥ **प्रामाणिकाः इति** ॥ एवञ्च तन्वङ्गी, सुगात्री, कलकण्ठी, इत्यपभ्रंशा एवेति भावः । **पुच्छाच्चेति** ॥ संयोगोपधत्वेऽपि पुच्छशब्दान्तात् ङीष्वेति वक्तव्यमित्यर्थः । **कबरमणीति** ॥ कबरादिभ्यः परो यः पुच्छशब्दः तदन्तात् नित्यं ङीषिति वक्तव्यमित्यर्थः । पुच्छाच्चेत्युक्तविकल्पापवादः । कबरमित्यस्य व्याख्यानं चित्रमिति । **इत्यादीति** ॥ मणिपुच्छी वृश्चिकी, विषपुच्छी, शरपुच्छी पक्षिजातिविशेषः । **उपमानादिति** ॥ उपमानात् परौ यौ पक्षपुच्छशब्दौ तदन्तादपि ङीषित्यर्थः । **नित्यमित्येवेति** ॥ नित्यमित्यनुवर्तत एवेत्यर्थः । विकल्पापवादः । **उलूकपक्षी शालेति** ॥ उलूकः पक्षिविशेषः, उलूकपक्षाविव पक्षौ पार्श्वे यस्या

## ५१२ । न क्रोडादिबह्वचः । (४-१-५६)

क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष् । कल्याणक्रोडा । अश्वानामुरः क्रोडा । आकृतिगणोऽयम् । सुजघना ।

## ५१३ । सहनञ्विद्यमानपूर्वाच्च । (४-१-५७)

सहेत्यादित्रिकपूर्वान्न ङीष् । सकेशा । अकेशा । विद्यमाननासिका ।

## ५१४ । नखमुखात्संज्ञायाम् । (४-१-५८)

ङीष्न स्यात् । शूर्पणखा । गौरमुखा । 'संज्ञायाम्' किम् । ताम्रमुखी कन्या ।

इति विग्रहः । 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यः उत्तरपदलोपश्च' इति समासः । संयोगोपधत्वादप्राप्ते विधिः । **उलूकपुच्छी सेनेति** ॥ उलूकपुच्छमिव पुच्छं पश्चिमान्तः यस्या इति विग्रहः । पूर्ववदेव बहुव्रीहिः । 'पुच्छाच्च' इति विकल्पस्यापवादः । **न क्रोडादिबह्वचः** ॥ क्रोडा आदिर्यस्येति बहवः अचः यस्येति च विग्रहः । क्रोडादिश्च बह्वच् च इति समाहारद्वन्द्वः । **क्रोडादेरिति** ॥ क्रोडादिर्गणः बह्वच् च यत् स्वाङ्गं तदन्तात् ङीष् नेत्यर्थः । **कल्याणक्रोडेति** ॥ कल्याणी क्रोडा यस्या इति विग्रहः । 'स्त्रियाः पुंवत्' इति कल्याणशब्दस्य पुंवत्त्वम् । **अश्वानामिति** ॥ हरदत्तादिमते क्रोडाशब्दो नित्यस्त्रीलिङ्गः । उपसर्जनह्रस्वत्वे अदन्ततया 'स्वाङ्गाच्चोपसर्जनात्' इति प्राप्तो ङीष् निषिध्यते । अमरस्तु "न ना क्रोडं भुजान्तरम्" इति स्त्रीत्वन्नपुंसकत्वञ्च आह । क्वचित् कोशे पुंस्त्वमपि दृश्यते । क्रोडादिगणे क्रोडेति प्रातिपदिकं पठ्यते । एवञ्च लिङ्गत्रयेऽपि उदाहरणं निर्बाधम् । **आकृतिगणोऽयमिति** ॥ क्रोडादिरिति शेषः । **सुजघनेति** ॥ बह्वच उदाहरणम् । सु शोभनं जघनं यस्या इति विग्रहः । **सहनञ्** ॥ **त्रिकपूर्वादिति** ॥ स्वाङ्गादिति शेषः । **सकेशेति** ॥ सह केशाः यस्या इति बहुव्रीहिः । सहशब्दो विद्यमानवचनः । 'वोपसर्जनस्य' इति सभावविकल्पः । 'स्वाङ्गाच्च' इति प्राप्तस्य निषेधः । 'नासिकोदर' इति ङीष्विकल्पोऽनेन बाध्यते इत्युक्तं स्मारयितुमुदाहरति । **विद्यमाननासिकेति** ॥ विद्यमाना नासिका यस्याः इति बहुव्रीहिः । **नखमुखात् संज्ञायाम्** ॥ नखमुखादिति समाहारद्वन्द्वः । शेषपूरणेन सूत्रं व्याचष्टे । **ङीष् नेति** ॥ 'स्वाङ्गाच्च' इति प्राप्तस्य निषेधोऽयम् । **शूर्पणखेति** ॥ राक्षसीविशेषस्य नाम । शूर्पाणीव करुहाः यस्या इत्यस्वपदविग्रहः । संज्ञात्वेन नित्यसमासत्वात् । 'पूर्वपदात् संज्ञायाम्' इति णत्वम् । केवलयौगिकत्वे तु ङीष् भवत्येव । णत्वन्तु न । **गौरमुखेति** ॥ कस्याश्चिन्नाम । श्वेतं मुखं यस्या इत्यस्वपदविग्रहः । **ताम्रमुखीति** ॥ यौगिकोऽयम् । ताम्रं मुखं यस्या इति विग्रहः । **दिक्पूर्वपदान्ङीप्** ॥ दिक् पूर्वपदं यस्येति विग्रहः । स्वाङ्गादित्यनुवर्तते । प्रातिपदिकादिति च 'अन्यतो ङीष्' इत्यतो ङीषित्यनुवृत्तं षष्ठ्या विपरिणम्यते ।

## ५१५। दिक्पूर्वपदान्ङीप्। (४-१-६०)

दिक्पूर्वपदात्स्वाङ्गान्तात्प्रातिपदिकात्परस्य ङीषो ङीबादेशः स्यात्। प्राङ्मुखी। आद्युदात्तं पदम्।

## ५१६। वाहः। (४-१-६१)

वाहन्तात्प्रातिपदिकान्ङीष्स्यात्। ङीषेवानुवर्तते न ङीप्। 'दित्यवाट् च मे दित्यौही च मे'।

## ५१७। सख्यशिश्वीति भाषायाम्। (४-१-६२)

इतिशब्दः प्रकारे 'भाषायाम्' इत्यस्यानन्तरं द्रष्टव्यः। तेन छन्दस्यपि क्वचित्। सखी। अशिश्वी। 'आधेनवो धुनयन्तामशिश्वीः'।

---

तदाह। **दिक्पूर्वेत्यादिना** ॥ **प्राङ्मुखीति** ॥ प्राक् मुखं यस्या इति विग्रहः। ङीषो ङीब्विधेः फलमाह। **आद्युदात्तं पदमिति** ॥ ङीपः पित्त्वादनुदात्तत्वे बहुव्रीहिप्रकृतिस्वरेणाद्युदात्तत्वम्। ङीषि तु प्रत्ययस्वरेणान्तोदात्तत्वं स्यादित्यर्थः। नच स्वतन्त्रो ङीबेव विधीयतामिति वाच्यम्। तथा सति प्राग्गुल्फेत्यादावपि 'असंयोगोपधात्' इति निषेधं बाधित्वा ङीप्प्रसङ्गात्। ङीषो ङीबादेशविधौ तु 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति विहितङीषो ङीब्विधानान्न दोषः। 'असंयोगोपधात्' इत्यस्यानुवृत्त्यङ्गीकारे तु प्रतिपत्तिगौरवमिति भावः। **वाहः** ॥ वाह इति पञ्चम्यन्तं प्रातिपदिकादित्यनुवृत्तस्य विशेषणम्, तदन्तविधिः। तदाह। **वाहन्तादिति** ॥ **ङीषेवानुवर्तते इति** ॥ 'अन्यतो ङीष्' इत्यत इति शेषः। **न ङीबिति** ॥ 'दिक्पूर्वपदात्' इति पूर्वसूत्रे सन्निहितमपि ङीब्ग्रहणमिह नानुवर्तते, अस्वरितत्वादित्यर्थः। स्वरे विशेषः। **दित्यौहीति** ॥ गवान्तावत् षण्मासात्मकमेकैकं वयः। "गर्भाश्च मे वत्साश्च मे" इत्यनुवाके अनुक्रान्तानि वयांसि। "तत्र तृतीयं वयो दित्यशब्देनोच्यते" इति यजुर्वेदभाष्ये भवस्वामिधूर्तस्वाम्यादिकृतकल्पभाष्येषु च स्पष्टम्। दित्यं वहतीति विग्रहे 'च्छन्दसि सहः, वहश्च' इति ण्विः, उपधावृद्धिः, उपपदसमासः, दित्यवाह्शब्दात् ङीष्, 'वाह ऊठ्, एत्येधत्यूठ्सु' इति वृद्धिः। दित्यौहीति रूपम्। ण्विप्रत्ययस्य छन्दोमात्रविषयत्वाद्वेदवाक्यमुदाहृतम्। लोके तु वाहयतेः क्विपि, वाह्शब्दात् ङीषि, दित्यौहीति रूपमस्ति। वैदिकप्रक्रियायामुपन्यसनीयमप्येतत् सूत्रमेतदर्थमिहोपन्यस्तम्। **सख्यशिश्वी** ॥ सखिशब्दात् अशिशुशब्दाच्च स्त्रियां ङीष् निपात्यते भाषायाम्। लौकिकप्रयोगो भाषा। तर्हि वेदे नैव स्यादित्यत आह। **इतिशब्दः इति** ॥ प्रकारे इत्यनन्तरं वर्तते इति शेषः। प्रकारस्सजातीयता। **भाषायामित्यस्येति** ॥ सच इतिशब्दः भाषायामित्यस्यानन्तरं सन्निवेश्यते इत्यर्थः। ततश्च भाषायां वेदे चेति फलितम्। नन्वेवं सति भाषायामिति व्यर्थमित्यत आह। **तेनेति** ॥ भाषाग्रहणेन भाषायां सर्वत्र भवति, वेदे तु क्वचिदिति लभ्यते इत्यर्थः। **सखीति** ॥ सखिशब्दात् ङीषि 'यस्येति च' इति खकारादिकारस्य लोपः। भाषायां किम्। "सखा

## ५१८ । जातेरस्त्रीविषयादयोपधात् । (४-१-६३)

**जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष्स्यात् ।**

'आकृतिग्रहणा जातिः[1]—

अनुगतसंस्थानव्यङ्ग्येत्यर्थः । तटी ।

—लिङ्गानाञ्च न सर्वभाक्[2] ।

सकृदाख्यातनिर्ग्राह्या—

सप्तपदा भव" । **अशिश्वीति** ॥ न विद्यते शिशुर्यस्या इति विग्रहः । अशिशुशब्दात् ङीषि इकारस्य यण् "अशिश्वी शिशुना विना" इत्यमरः । छन्दस्यपि क्वचिदित्यस्योदाहरणमाह । **आ धेनवो धुनयन्तामशिश्वीरिति** ॥ अशिश्वीशब्दात् जसि 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधाभावश्छान्दसः । **जातेरस्त्री** ॥ अर्थे कार्यासम्भवाच्छब्दे कार्यं विज्ञायते इत्याह । **जातिवाचीति** ॥ **न च स्त्रियान्नियतमिति** ॥ स्त्रीविषयः नियमेन वाच्या यस्याः इति बहुव्रीहिणा स्त्रीविषयशब्दो नियतस्त्रीलिङ्गपरः, तथाच अस्त्रीविषयादित्यनेन अनियतस्त्रीलिङ्गादिति विवक्षितम्, नैयत्यलाभायैव विषयग्रहणम् । अन्यथा अस्त्रिया इत्येवावक्ष्यदिति भावः । ननु यदि 'नित्यमेकमनेकानुगतं सामान्यम्' इति तार्किकोक्ता जातिः, तर्हि शुक्लादिगुणस्य नित्यत्वैकत्वपक्षे शुक्लेत्यादावतिव्याप्तिः, औपगवी कठी इत्यादावतिव्याप्तिश्च । सवर्णेभ्यस्सवर्णासु जायन्ते हि सजातयः' इत्यादिस्मृत्या जननेन यत् प्राप्यते ब्राह्मणत्वादि सा जातिश्चेद्युवत्वादावव्याप्तिः । तथा च युवतितरेत्यत्र 'जातेश्च' इति पुंवत्त्वनिषेधो न स्यात् इति चेन्न । "आकृतिग्रहणा जातिः लिङ्गानाञ्च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रञ्च चरणैस्सह" इति भाष्योक्तत्रिविधजातेर्विवक्षितत्वात् इत्यभिप्रेत्य भाष्योक्तत्रैविध्यं प्रपञ्चयति । **आकृतिग्रहणा जातिरिति** ॥ प्रथमेति शेषः । आकृतिः अवयवसन्निवेशविशेषः गृह्यते अनेनेति ग्रहणं व्यञ्जकम्, करणे ल्युट्, सामान्ये नपुंसकम्, आकृतिः ग्रहणं यस्या इति विग्रहः । उपसर्जनत्वात् 'टिड्ढाणञ्' इति ङीन्न । फलितमाह । **अनुगतेति** ॥ सर्वासु घटादितत्तद्व्यक्तिषु एकरूपतत्तदाकारव्यङ्ग्येति यावत् । गृह्यत इति कर्मणि ल्युट् । आकृत्या ग्रहणा आकृतिग्रहणेति तु न व्याख्येयम् । 'टिड्ढाणञ्' इति ङीप्प्रसङ्गात् । **तटीति** ॥ "तटं त्रिषु" इत्यमरः । जलसमीपप्रदेशः आकृतिविशेषविशिष्टस्तटः, अतस्तटत्वमाकृतिव्यङ्ग्यत्वाजातिः, अतस्तटशब्दस्य जातिवाचित्वादनियतस्त्रीलिङ्गत्वादयोपधत्वाच्च ङीषिति भावः । युवत्वादिकमप्याकृतिव्यङ्ग्यत्वात् जातिरेव । अनेन प्रथमलक्षणेन अनुगताकारप्रत्ययसिद्धा तटत्वादिजातिरुक्ता । नन्वेवं सति वृषलत्वादीनां जातित्वं न स्यात् । तदवयवसन्निवेशस्य ब्राह्मणादिसाधारणत्वेन वृषलत्वादीनां तद्व्यङ्ग्यत्वाभावादित्याशङ्क्य आह । **लिङ्गानाञ्च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्येति** ॥ अन्या जातिरिति शेषः । लिङ्गानामिति कर्मणि षष्ठी । सर्वाणि लिङ्गानि न भजते इत्यर्थः । असमर्थसमास आर्षः । सकृदित्यतः पूर्वं एकस्यां

---

१–२ भाष्योक्तमिदम् ।

'असर्वलिङ्गत्वे सत्येकस्यां व्यक्तौ कथनाद्व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिः' इति लक्षणान्तरम् । वृषळी । 'सत्यन्तम्' किम् । शुक्ला । 'सकृत्—' इत्यादि किम् । देवदत्ता ।

—गोत्रं च चरणैः सह ॥'

अपत्यप्रत्ययान्तः शाखाध्येतृवाची च शब्दो जातिकार्यं लभत इत्यर्थः । औपगवी । कठी । कलापी । बह्वृची । ब्राह्मणीत्यत्र तु शार्ङ्गरवादिपाठान्ङीना

---

व्यक्ताविति शेषः । आख्यातेति भावे क्तः, उपदेश इत्यर्थः । निर्ग्राह्येत्यस्य व्यक्त्यन्तरे उपदेशं विनापि सुगमेत्यर्थः । निरित्युपसर्गवशात् । निर्ग्राह्येत्यनन्तरमन्या जातिरिति शेषः । फलितमाह । **असर्वेति** ॥ **एकस्यामिति** ॥ एकस्यां व्यक्तौ वृषळ इत्युपदेशात् व्यक्त्यन्तरे तदुपदेशं विनापि सुगमेति यावत् । **लक्षणान्तरमिति** ॥ जात्यन्तरमित्यर्थः । अन्यथा उक्ततटत्वादिजातेरेव 'आकृतिग्रहणा जातिः' इत्युक्तलक्षणादन्यदिदं लक्षणमिति स्यात्, नहीदं युज्यते । तटस्य सर्वलिङ्गत्वात् । **वृषळीति** ॥ वृषळत्वं ह्यसर्वलिङ्गम्, नपुंसकत्वाभावात् एकस्यां व्यक्तौ वृषळत्वे उपदिष्टे सति तदपत्यसहोदरादिषु तदुपदेशं विना तस्य सुग्रहत्वात् सकृदाख्यातनिर्ग्राह्यश्चेति भावः । ब्राह्मणत्वन्तु पुत्रपौत्रादौ यद्यपि न सुगमम्, ब्राह्मणात् क्षत्रियायामुत्पन्नस्य ब्राह्मणत्वाभावात् । तथापि पित्रादौ सुगममेव । एवं क्षत्रियत्वं वैश्यत्वं च तत्पितृत्वादावेव सुग्रहम् । **सत्यन्तं किमिति** ॥ असर्वलिङ्गत्वे सतीति किमर्थमित्यर्थः । **शुक्लेति** ॥ बलाकेति शेषः । 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इति विशेष्यनिघ्नतया त्रिलिङ्गत्वादसर्वलिङ्गत्वाभावात् शुक्लत्वन्न जातिः । अवयवसंस्थानव्यङ्ग्यत्वाभावान्न पूर्वलक्षणमपि । **देवदत्तेति** ॥ संज्ञात्वेन नपुंसकलिङ्गहीनतया असर्वलिङ्गत्वेऽपि न सकृदाख्यातनिर्ग्राह्यत्वमिति भावः । अनेन द्वितीयलक्षणेन जननिमित्तकब्राह्मणत्वादिजातिसङ्ग्रहः । नन्वेवमपि औपगवी कठीत्याद्यसङ्ग्रहः, औपगवत्वादेरनुगतसंस्थानव्यङ्ग्यत्वाभावात् सर्वलिङ्गत्वाच्चेत्यत आह । **गोत्रञ्च चरणैस्सहेति** ॥ जातिरित्यनुषज्यते । गोत्रशब्देन अपत्यं विवक्षितम्, नतु पौत्रप्रभृतीति पारिभाषिकम् । व्याख्यानात् । अत एवानन्तरापत्यप्रत्ययान्ते अवन्तीत्यत्र जातिप्रयुक्तो ङीषिति 'अनुपसर्जनात्' इति सूत्रस्थभाष्यं सङ्गच्छते । शब्देन्दुशेखरे तु पारिभाषिकमेव गोत्रमिह विवक्षितमिति प्रपञ्चितम् । चरणशब्दस्तु शाखाध्येतरि प्रसिद्धः । चरणैस्सह गोत्रं जातिरिति लभ्यते । गोत्रञ्चरणाश्च जातिरिति यावत् । यद्यपि अनुगताकारप्रत्ययवेद्या जननविशेषप्रयुक्ता चेति द्विविधैव जातिर्लोके प्रसिद्धा । तत्र गोत्रचरणाः नान्तर्भवन्ति । तथापि अतस्मिन् तच्छब्दस्तद्वाचिषु शब्देषु तत्कार्यार्थ इत्यभिप्रेत्य व्याचष्टे । **अपत्यप्रत्ययान्तः इत्यादिना** ॥ गोत्रमुदाहरति । **औपगवीति** ॥ उपगोरपत्यं स्त्री इत्यर्थे 'तस्यापत्यम्' इत्यणि 'टिड्ढाणञ्' इति ङीपम्बाधित्वा परत्वादनेन ङीष् । स्वरे भेदः । चरणमुदाहरति । **कठीति** ॥ कठेन प्रोक्तमधीयानेत्यर्थः । **कलापीति** ॥ वैशम्पायनान्तेवासित्वनिबन्धनो णिनिः । 'कठचरकाल्लुक्' इति तस्य लुक् । ततः 'तदधीते' इत्यणः 'प्रोक्ताल्लुक्' इति लुक्, ततो ङीष्, चरणविषये उदा-

ङीष्बाध्यते । 'जातेः' किम् । मुण्डा । 'अस्त्रीविषयात्' किम् । बलाका । 'अयोपधात्' किम् । क्षत्रिया । योपधप्रतिषेधे 'हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः' (वा २४९५) । हयी । गवयी । मुकयी । 'हलस्तद्धितस्य' (सू ४७२) इति लोपः । 'मनोर्जातावञ्यतौ षुक्च' मनुषी । 'मत्स्यस्य ङ्याम्' (वा ४१९८) । मत्सी ।

हरणान्तरमाह । **बह्वृचीति** ॥ बहवः ऋचः अध्येयाः यस्या इति विग्रहः । "ऋक्पूरब्धूः पथामानक्षे' 'अनृचबह्वृचावध्येतर्येव' इत्यच्समासान्तः, ततो ङीष् । 'पुरा कल्पे तु नारीणां मौञ्जीबन्धनमिष्यते । अध्यापनञ्च वेदानां सावित्रीवचनन्तथा ॥" इति यमादिस्मृतिः । ननु 'लिङ्गानाञ्च न सर्वभाक्' इति 'गोत्रञ्च चरणैस्सह' इति च जातिलक्षणे ब्राह्मणीति परित्यज्य वृषळी औपगवी इत्येवं कुत उदाहृतमित्यत आह । **ब्राह्मणीत्यत्रेति** ॥ ब्रह्मणः अपत्यमित्यर्थे 'तस्यापत्यम्' इत्यणि 'ब्राह्मोऽजातौ' इति टिलोपाभावे आदिवृद्धौ ब्राह्मणशब्दः । स्त्रियान्तु जातिलक्षणं ङीषं बाधित्वा 'शार्ङ्गरवाद्यञो ङीन्' इति ङीन् । शार्ङ्गरवादिगणे तत्पाठस्य निरवकाशत्वादिति भावः । तदेवं जातिस्वरूपमुक्त्वा ङीष्विधौ तद्ग्रहणस्य प्रयोजनं पृच्छति । **जातेः किमिति । मुण्डेति** ॥ मुण्डत्वन्नाम विलुप्तसर्वकेशत्वम्, तत्तु नाकृतिव्यङ्ग्यम्, केशदशायामपि तदाकृतेस्सत्त्वात् । 'नापि लिङ्गानाञ्च' इति लक्षणलक्षितम्, सर्वलिङ्गत्वात् । नापि गोत्रचरणान्तर्भूतम्, अतो न जातिरिति भावः । **अस्त्रीविषयात् किमिति** ॥ विषयग्रहणलभ्यं नियतत्वं प्रवेश्य अनियतस्त्रीलिङ्गादिति किमर्थमित्यर्थः । **बलाकेति** ॥ पक्षिवर्गे 'बलाका बिसकण्ठिका' इत्यमरः । बलाकात्वस्य आकृतिव्यङ्ग्यतया जातित्वेऽपि नियतस्त्रीलिङ्गत्वान्न ङीषित्यर्थः । यद्यपि बलां कायतीति यौगिकत्वे त्रिलिङ्गत्वमस्ति, तथापि प्रवृत्तिनिमित्तैक्ये स्त्रीलिङ्गान्यलिङ्गरहिताभिन्नादित्यर्थो विवक्षित इति न दोषः । जातिविशेषे नियतस्त्रीलिङ्गत्वात् । भाष्ये तु अनियतस्त्रीलिङ्गत्वमङ्गीकृत्य अजादित्वाट्टाबिति समाहितम् । **क्षत्त्रियेति** ॥ 'लिङ्गानाञ्च न सर्वभाक्' इति जातिलक्षणसत्त्वेऽपि योपधत्वान्न ङीषिति भावः । **योपधनिषेधे हयगवयेति** ॥ वार्तिकमिदम् । हयादीनां योपधत्वेऽपि ङीष् वाच्य इत्यर्थः । **हयीति** ॥ अश्वा प्रसिद्धा । **गवयीति** ॥ गोसदृशश्चतुष्पाज्जातिविशेषः । **मुकयीति** ॥ चतुष्पाज्जातिविशेषः । **हलः इति** ॥ मनुष्यशब्दात् स्त्रियां ङीषि मनुष्य ई इति स्थिते 'हलस्तद्धितस्य' इति यकारस्य लोपे 'यस्येति च' इत्यकारलोपे मनुषीति रूपमित्यर्थः । 'हलस्ताद्धितस्य' इति लोपप्रवृत्तये यकारस्य तद्धितावयवत्वं दर्शयितुमाह । **मनोर्जाताविति** ॥ तद्धिताधिकारे अपत्याधिकारस्थमिदं सूत्रम् । मनुशब्दादपत्ये अञ्यतौ प्रत्ययौ स्तः प्रकृतेः षुक्च, प्रकृतिप्रत्ययसमुदायेन जातौ गम्यायामिति तदर्थः । मत्स्यशब्दात् ङीषि यकारस्य तद्धितावयवत्वाभावादप्राप्ते लोपे आह । **मत्स्यस्य ङ्यामिति** ॥ 'सूर्यतिष्य' इति सूत्रे वार्तिकमिदम् । मत्स्यस्यावयवस्य यकारस्य लोपस्स्यात् ङ्यामेवेति नियमार्थमिदम् । **मत्सीति** ॥ ङीषि यकारलोपे 'यस्येति च' इति लोप इति भावः । ङ्यां किम् । मात्स्योऽव-

## ५१९। पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च। (४-१-६४)

पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि ङीष्स्यात्। ओदनपाकी। शङ्कुकर्णी। शालपर्णी। शङ्खपुष्पी। दासीफली। दर्भमूली। गोवाली। ओषधिविशेषे रूढा एते।

## ५२०। इतो मनुष्यजातेः। (४-१-६५)

ङीष्स्यात्। दाक्षी। योपधादपि। उदमेयस्यापत्यं स्त्री औदमेयी। 'मनुष्य–' इति किम्। तित्तिरिः।

## ५२१। ऊङुतः। (४-१-६६)

उकारान्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात्। कुरूः। 'कुरुनादिभ्यो ण्यः' (सू ११९०)। तस्य 'स्त्रियामवन्ति–' (सू ११९५) इत्यादिना लुक्। 'अयोपधात्' किम्। अध्वर्युः। 'अप्राणिजातेश्चारज्ज्वादी-

---

तारः। **पाककर्ण** ॥ 'जातेरस्त्रीविषयात्' इति पूर्वसूत्रेणैव सिद्धे किमर्थमित्यत आह ॥ **स्त्रीविषयादपीति** ॥ नियतस्त्रीलिङ्गादपीत्यर्थः। नियतस्त्रीलिङ्गत्वात् जातिवाचित्वन्दर्शयितुमाह। **ओषधिविशेषे रूढाः इति** ॥ अवयवव्युत्पत्तिरहिता इत्यर्थः। **इतो मनुष्यजातेः** ॥ शेषपूरणेन सूत्रं व्याचष्टे। **ङीष् स्यादिति** ॥ इदन्तान्मनुष्यजातिवाचिनः स्त्रियां ङीष्स्यादित्यर्थः। स्त्रीप्रत्ययविधिषु अत इत्यनुवृत्तेरिदन्तात् 'जातेरस्त्रीविषयात्' इत्यप्राप्तौ वचनम्। **दाक्षीति** ॥ दक्षस्यापत्यं स्त्री इत्यर्थे अत इञि अल्लोपः, आदिवृद्धिः, ङीष्, 'यस्येति च' इति इकारलोपः। 'गोत्रञ्च चरणैस्सह' इति जातिवाचित्वम्, दक्षः प्रजापतिविशेषः। **योपधादपीति** ॥ अयं ङीषिति शेषः। पुनर्जातिग्रहणेन योपधग्रहणस्य अनुवृत्त्यभावबोधनादिति भावः। **औदमेयीति** ॥ उदमेयो नाम कश्चित्, तस्यापत्यं स्त्री इत्यर्थे अत इञ्। 'यस्येति च' इत्यल्लोपः। आदिवृद्धिः। औदमेयिशब्दात् ङीष्, 'यस्येति च' इति इकारलोपः। **तित्तिरिरिति** ॥ तित्तिरिः पक्षिजातिविशेषः। स्त्रियां ङीष् न। अमनुष्यजातिवाचित्वादिति भावः। 'स्त्रीपुंसयोरपत्यान्तः द्विचतुष्षट्पदा अपि' इत्यमरकोशादयं स्त्रियामपि भवति, द्विपात्त्वात्। **ऊङुतः** ॥ अयोपधादिति मनुष्यजातेरिति चानुवर्तते, उत इति तद्विशेषणम्, तदन्तविधिः। तदाह। **उकारान्तादित्यादिना** ॥ **कुरूरिति** ॥ कुरुक्षेत्रस्य राजा कुरुः, तस्यापत्यं स्त्रीत्यर्थः। 'गोत्रञ्च चरणैस्सह' इति जातित्वम्। कुरुशब्दात् ऊङि सवर्णदीर्घः। ऊङि दीर्घोच्चारणस्य प्रयोजनं भाष्ये स्पष्टम्। 'तस्यापत्यम्' इत्यणमाशङ्क्य आह। **कुरुनादिभ्यो ण्यः इति** ॥ अपत्याधिकारस्थमिदं सूत्रम्। अनेन सूत्रेण अणपवादो ण्यप्रत्यय इत्यर्थः। तर्हि स श्रूयेतेत्यत आह। **तस्येति** ॥ **अध्वर्युरिति** ॥ अध्वर्युशाखाध्यायिनीत्यर्थः। चरणत्वात् जातित्वम्। "पुरा युगेषु नारीणां मौञ्जीबन्धनमिष्यते। अध्यापनञ्च वेदानां सावित्रीवचनं तथा ॥" इति यमादिस्मृतिः। **अप्राणिजातेश्चेति** ॥

नामुपसङ्ख्यानम्' (वा २५०२) । रज्ज्वादिपर्युदासादुवर्णान्तेभ्य एव । अलाब्वा । कर्कन्ध्वा । अनयोर्दीर्घान्तत्वेऽपि 'नोङ्धात्वोः' (सू ३७२१) इति विभक्त्युदात्तत्वप्रतिषेध ऊङः फलम् । प्राणिजातेस्तु कृकवाकुः । रज्ज्वादेस्तु रज्जुः । हनुः ।

## ५२२ । बाह्वन्तात्संज्ञायाम् । (४-१-६७)

स्त्रियामूङ् स्यात् । भद्रबाहूः । 'संज्ञायाम्' किम् । वृत्तबाहुः ।

## ५२३ । पङ्गोश्च । (४-१-६८)

पङ्गूः । '[१]श्वशुरस्योकाराकारलोपश्च' (वा ५०३९) । चादूङ् ।

---

वाचकानामिति शेषः । रज्ज्वादिभिन्नानामप्राणिजातिवाचकानामपि ङीष् उपसङ्ख्यानमित्यर्थः । नन्वत्र उत इति सम्बध्यते वा न वा, नाद्यः, अलाबूरिति भाष्योदाहरणविरोधात् । अलाबूशब्दस्य ऊदन्तत्वात् । न द्वितीयः, अदन्तादपि अप्राणिजातिवाचिनः ऊङापत्तेरित्यत आह । **रज्ज्वादिपर्युदासादिति** ॥ उत इति न सम्बध्यते । अदन्तेषु नातिप्रसङ्गः 'नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिः' इति न्यायेन रज्ज्वादिसदृशानामुवर्णान्तानामेव ग्रहणादिति भावः । **अलाब्वेति** ॥ अलाबूशब्दादूङि सवर्णदीर्घे अलाबूशब्दात् ऊङन्तात् सुबुत्पत्तिः । ङयि यणादेशे अलाब्वै इति रूपम् । एवं कर्कन्धूशब्दादूङन्तात् ङयि कर्कन्ध्वै इति रूपम् । "कर्कन्धूर्बदरी" इत्यमरः । "तुम्ब्यलाबूरुभे समे" इति च । ननु ऊदन्तत्वादनयोरूङ्विधिर्व्यर्थ इत्यत आह । **अनयोरिति** ॥ **कृकवाकुरिति** ॥ पक्षिजातिविशेषः । अत्र मनुष्यजातित्वाभावात् पूर्वेणापि न ङीष् । **बाह्वन्तात्संज्ञायाम्** ॥ ऊङुत इत्यतः ऊङित्यनुवर्तते, स्त्रियामित्यधिकृतम्, प्रातिपदिकादिति च । तदाह । **स्त्रियामूङ् स्यादिति** ॥ **भद्रबाहूरिति** ॥ कस्याश्चित्संज्ञा । **संज्ञायां किमिति** ॥ संज्ञायामित्येतत् किमर्थमिति प्रश्नः । **वृत्तबाहुरिति** ॥ वृत्तौ बाहू यस्याः इति विग्रहः । स्त्रियामपि नोङ् । **पङ्गोश्च** ॥ ऊङिति सूत्रशेषः । भग्नपादत्वं पङ्गुत्वं न जातिः । आसीने शयाने च आकृत्या दुर्ग्रहत्वात् एकस्यां व्यक्तौ विकलपादोऽयं पङ्गुरिति पङ्गुत्वस्योपदेशेऽपि व्यक्त्यन्तरेषु आसनशयनाद्यवस्थेषु तस्य दुर्ग्रहत्वात्, गोत्रचरणानन्तर्भावाच्च । ततश्च 'ऊङुतः' इत्यप्राप्तौ वचनमिदम् । **श्वशुरस्येति**[१] ॥ वृत्त्यादौ पठितमिदम् । चकारात् ऊङनुकृष्यते । श्वशुरस्य स्त्री इत्यर्थे पुंयोगलक्षणे ङीषि प्राप्ते तदपवादः ऊङ्, तत्सन्नियोगेन रेफादकारस्य उकारस्य लोपश्चेत्यर्थः । नच वकारादकारस्य लोपश्शङ्क्यः । अन्त्यबाधेऽन्त्यसदेशस्य' इति वचनात् । 'यस्येति च' इति तु

---

१ इदं च 'श्वशुरः श्वश्र्वा' (१-२-७१) इति निर्देशासिद्धमिति भावः । 'ङ्याप्—' (४-१-१) इति सूत्रस्थस्य 'उवर्णान्तादूङ् विधीयते । तत्रैकादेशः । एकादेशे कृतेऽन्तादिवद्भावात्प्रातिपदिकसंज्ञा भविष्यति' इति भाष्यस्य स्वरसस्तु 'जम्ब्वादित्वान्निष्पन्नादूङ् दीर्घोकारान्त एव वा कर्तव्यः' इत्येव लभ्यते ।

पुंयोगलक्षणस्य ङीषोऽपवादः। लिङ्गविशिष्टपरिभाषया स्वादयः। श्वश्रूः।

## ५२४। ऊरूत्तरपदादौपम्ये। (४-१-६९)

उपमानवाचि पूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात्। करभोरूः।

## ५२५। संहितशफलक्षणवामादेश्च। (४-१-७०)

अनौपम्यार्थं सूत्रम्। संहितोरूः। सैव शफोरूः। शफौ खुरौ ताविव संश्लिष्टत्वादुपचारात्। लक्षणशब्दादर्शआद्यच्। लक्षणोरूः। वामोरूः।

---

नात्र सम्बध्यते। ईकारे तद्धिते च तद्विधानात्। ननु श्वश्रूरित्यत्र कथं स्वादयः। 'ङ्याप्प्रातिपदिकात्' इत्यधिकृत्य तद्विधेः। अस्य च ङ्याबन्तत्वाभावात्। ऊङन्तस्य च प्रत्ययान्तत्वेन प्रातिपदिकत्वाभावादित्यत आह। **लिङ्गविशिष्टेति**॥ 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषयेत्यर्थः। वस्तुतस्तु श्वशुरस्येति वचनममूलकमेव। भाष्ये अदृष्टत्वात् 'ङ्याप्प्रातिपदिकात्' इति सूत्रस्थभाष्यविरोधाच्च। तत्र हि 'ङ्याप्प्रातिपदिकात्' इत्यत्र ऊङोऽपि ग्रहणं कर्तव्यमित्याक्षिप्य उवर्णान्तादूङ् विधीयते। तत्र सवर्णदीर्घे एकादेशे कृते पूर्वान्तत्वेन प्रातिपदिकत्वलाभादेव सिद्धमित्युक्तम्। यदि ह्युक्तरीत्या श्वश्रूशब्दो व्युत्पाद्यते तर्हि रेफादकारस्य लुप्तत्वेन एकादेशाप्रसक्तेस्तदसङ्गतिः स्पष्टैव। तथाच श्वश्रूरित्यव्युत्पन्नं प्रातिपदिकमिति शब्देन्दुशेखरे स्पष्टम्। **ऊरूत्तर**॥ ऊरुः उत्तरपदं यस्येति बहुव्रीहिः। प्रातिपदिकादित्यनुवर्तते। उत्तरपदेत्यनेन पूर्वपदमाक्षिप्तम्, औपम्ये इति तत्रान्वेति, उपमीयते अनयेत्युपमा उपमानम्, उपमैव औपम्यं स्वार्थे ष्यञ्। तदाह। **उपमानवाचीति॥ करभोरूरिति॥** करभाविव ऊरू यस्या इति विग्रहः। 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः। करभोरुत्वस्याजातित्वात् अप्राप्तौ वचनम्। ऊर्वाकृतेः करभसदृशपुरुषोरुसाधारणत्वेन करभसादृश्यघटितकरभोरुत्वस्य आकृतिग्राह्यत्वाभावात् असर्वलिङ्गत्वाद्यभावाच्च। उपमानवाचीति किम्। वृत्तोरुः, करभोपमोरुरित्यादौ नोङ्। करभशब्दस्य करभसदृशे अवृत्त्या उपमानवाचित्वाभावात्। **संहितशफ**॥ संहित शफ लक्षण वाम एतत्पूर्वपदादप्यूरूत्तरपदादूङ् स्यादित्यर्थः। पूर्वेणैव सिद्धे किमर्थमित्यत आह। **अनौपम्यार्थमिति॥ संहितोरूरिति॥** संहितौ संश्लिष्टौ ऊरू यस्या इति विग्रहः। **सैव शफोरूरिति॥** संहितोरूरेव शफोरूरित्यनेनोच्यत इत्यर्थः। शफशब्दं विवृणोति। **शफौ खुराविति॥** यद्यपि 'शफं क्लीबे खुरः पुमान्' इत्यमरः। तथापि 'शफः खुरे गवादीनाम्' इति चन्द्रकोशात् पुंस्त्वमिति भावः। ननु शफत्वमूर्वोः प्रत्यक्षविरुद्धमित्यत आह। **ताविवेति**॥ यतः शफाविव, अत ऊरू शफशब्देनोच्येते इत्यर्थः। कुतस्तत्सादृश्यमित्यत आह। **संश्लिष्टत्वादिति॥** तर्ह्युपमानवाचिपूर्वपदत्वादेव सिद्धमित्यत आह। **उपचारादिति॥** शफवत् वास्तवं संश्लिष्टत्वमवलम्ब्य शफत्वस्य आरोपादित्यर्थः। एवञ्च शफशब्दस्य तत्सादृश्याप्रतीतेर्नोक्तदोष इति भावः। **लक्षणोरूरिति॥** लक्षणौ ऊरू यस्या इति विग्रहः। ननु मार्दवादिगुणपर्यायस्य

'सहितसहाभ्यां चेति वक्तव्यम्' (वा २५०३)। हितेन सह सहितौ ऊरू यस्याः सा सहितोरूः। सहेते इति सहौ ऊरू यस्याः सा सहोरूः। यद्वा। विद्यमानवचनस्य सहशब्दस्य ऊर्वतिशयप्रतिपादनाय प्रयोगः।

## ५२६। संज्ञायाम्। (४-१-७२)

कद्रुकमण्डल्वोः संज्ञायां स्त्रियामूङ् स्यात्। कद्रूः। कमण्डलूः। 'संज्ञायाम्' किम्। कद्रुः। कमण्डलुः। अच्छन्दोऽर्थं वचनम्।

## ५२७। शार्ङ्गरवाद्यञो ङीन्। (४-१-७३)

शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन्स्यात्। शार्ङ्गरवी।

---

लक्षणशब्दस्य कथमूरुशब्दसामानाधिकरण्यमित्यत आह। **लक्षणशब्दादिति**॥ लक्षण-मनयोरस्तीति विग्रहे लक्षणशब्दात् 'अर्शआदिभ्योऽच्' इत्यच्प्रत्यय इत्यर्थः। तथाच लक्षणयुक्तौ इत्यर्थलाभादिह नोक्तदोष इति भावः। **वामोरूरिति**॥ वामौ सुन्दरौ ऊरू यस्या इति विग्रहः। "वामौ वल्गुप्रतीपौ द्वौ" इत्यमरः। **सहितेति**॥ सहित सह आभ्यां परः यः ऊरुशब्दः तस्मादपि ऊङ् स्यादिति वक्तव्यमित्यर्थः। ननु संहितग्रहणेनैव एकदेशविकृत-न्यायेन सिद्धे पुनस्सहितग्रहणं व्यर्थमित्यत आह। **हितेनेति**॥ हितेन सहेति विग्रहे 'तेन सह' इति बहुव्रीहौ 'वोपसर्जनस्य' इति सभावे सहितशब्द इत्यर्थः। ननु सहशब्दस्य विद्यमा-नवचनत्वे सहोरूरित्यत्र सहशब्दप्रयोगो व्यर्थ इत्यत आह। **सहेते इति**॥ रतिकालिकमर्द-नमिति शेषः। विद्यमानवचनत्वेऽपि सहशब्दस्य न वैयर्थ्यमित्याह। **यद्वेति**॥ अतिशयेन विद्यमानत्वं विवक्षितमिति न वैयर्थ्यमिति भावः। **संज्ञायाम्**॥ कद्रुकमण्डल्वोः ऊङिति चानुवर्तते, स्त्रियामित्यधिकृतम्। तदाह। **कद्रुकमण्डल्वोः संज्ञायां स्त्रियामूङ् स्यादिति**॥ **अच्छन्दोऽर्थमिति**॥ पूर्वसूत्रे छन्दसीत्युक्तत्वात् लोके संज्ञायामप्राप्तौ अयमारम्भः। कद्रूरिति नागानां मातुस्संज्ञा। एतच्च महाभारतादौ स्पष्टम्। कमण्डलूरिति कस्यचिन्मृगस्य संज्ञा। अत एव 'चतुष्पाद्भ्यो ढञ्' इत्यत्र कामण्डलेय इत्युदाहरिष्यते। पात्रपर्या-यस्तु नोदाहरणम्। तस्य स्त्रीलिङ्गत्वाभावात्। **शार्ङ्गरवाद्यञो ङीन्**॥ शार्ङ्गरवादीति लुप्तपञ्चमीकम्। अञ इति षष्ठी, अत इत्यनुवृत्तं पञ्चम्यन्ते अन्वेति। जातेरित्यनुवृत्तं अता विशेष्यते। तदन्तविधिः। तदाह। **शार्ङ्गरवादेरित्यादिना**॥ **शार्ङ्गरवीति**॥ शृङ्गरो-रपत्यं स्त्रीत्यर्थे अण्, आदिवृद्धिः, रपरत्वम्, ओर्गुणः, 'गोत्रञ्च चरणैस्सह' इति जातित्वात् ङीषि प्राप्ते ङीन्। स्वरे विशेषः। **बैदीति**॥ विदस्यापत्यं स्त्रीत्यर्थः। 'अनृष्यानन्तर्ये बिदा-दिभ्योऽञ्'। गोत्रत्वेन जातित्वात् ङीषि प्राप्ते ङीन्। अञा अकारस्य विशेषणान्नेह। शूर-सेनी। 'जनपदशब्दात्' इत्यपत्ये अञ्। 'अतश्च' इति तस्य लुक्। अत्र जातिलक्षणङीषेव न तु ङीन्। अञो लुप्तत्वेन नकारादकारस्य अञोऽवयवत्वाभावात्। **नृनरयोर्वृद्धिश्चेति**॥

वैदी। 'जातेः' इत्यनुवृत्तेः पुंयोगे ङीषेव 'नृनरयोर्वृद्धिश्च' (ग ५४) इति गणसूत्रम्। नारी।

## ५२८। यङश्चाप्। ४-१-७४)

यङन्तात्स्त्रियां चाप्स्यात्। ञ्यङ्ष्यङोः सामान्यग्रहणम्। आम्बष्ठ्या। कारीषगन्ध्या। 'षाद्यञश्चाब्वाच्यः' (वा २५०५)। शार्कराक्ष्या। पौतिमाष्या।

---

चकारात् ङीन्। **नारीति** ॥ नृनरशब्दयोरुदाहरणम्। तत्र नृशब्दात् 'ऋन्नेभ्यः' इति ङीपि प्राप्ते ङीन्, ऋकारस्य वृद्धिः, रपरत्वम्। जातिलक्षणङीषस्तु नृशब्दान्न प्रसक्तिः, तत्र अत इत्यनुवृत्तेः। नरशब्दात्तु ङीनि नकारादकारस्य वृद्धिः। ननु परमपि 'यस्येति च' इति लोपं बाधित्वा अन्तरङ्गत्वादलोऽन्त्यपरिभाषया रेफादकारस्य वृद्धिस्स्यात्। न च कृतायामपि वृद्धौ 'यस्येति च' इत्यकारलोपस्स्यादिति वाच्यम्। वृद्धिविधिसामर्थ्यादेव तस्य लोपाभावसिद्धेरिति चेदुच्यते। नृनरयोरित्यत्र नर इति रेफान्तस्य लुप्ताकारस्यानुकरणम्। नरः अः नरः, ना च नरश्च नृनरौ, तयोरिति विग्रहः। नचैवमपि वानरीशब्दे अतिप्रसङ्ग इति वाच्यम्। अर्थवत एव ग्रहणात्। न च नृशब्दात् ङीनि वृद्धौ नारीति सिद्धेर्नरग्रहणं व्यर्थमिति वाच्यम्। नरत्वजातिवाचिनः नरशब्दात् स्त्रियां जातिलक्षणङीषि नरीति व्यावृत्त्यर्थत्वात्। वस्तुतस्तु 'नृनरयोर्वृद्धिश्च' इति गणसूत्रं नारब्धव्यमेव। 'तदस्य धर्म्यम्' इत्यनुवृत्तौ 'ऋतोऽञ्' इति सूत्रेण 'नरस्य चेति वक्तव्यम्' इति वार्तिकेन च नुर्धर्म्या नरस्य धर्म्येत्यर्थे नृशब्दान्नरशब्दाच्च अञि ततः 'टिड्ढाणञ्' इति ङीपि नारीति सिद्धेः। 'ञ्नित्यादिर्नित्यम्' इति प्रकृतेराद्युदात्तत्वे ङीपः पित्त्वादनुदात्तत्वम्। ङीन्यपि नित्स्वरेण प्रकृतेरुदात्तत्वमिति स्वरे विशेषाभावात्। नचैवं सति मनुष्यधर्म्यत्वेनैव बोधस्स्यात्, न तु नरत्वेनेति वाच्यम्। योग्यतया हि तद्धर्म्या नरत्वजातिविशिष्टैव बुध्यते। अत एव वास्तुनि भवो वास्तव्य इति रूपस्य 'दिगादिभ्यो यत्' इति भवार्थकतया सिद्धत्वात् 'वसेस्तव्यत्कर्तरि णिच्च' इति वचनं न कर्तव्यमिति भाष्यं सङ्गच्छते। रूढानां यथाकथञ्चिदन्वाख्यानमिति कैयटः' इति शब्देन्दुशेखरे स्थितम्। **यङश्चाप्** ॥ पकारो 'हल्ङ्याब्भ्यः' इत्यत्र ग्रहणार्थः। चकारः 'चितः' इत्यन्तोदात्तार्थः। **सामान्येति** ॥ यङ्रूपस्य उभयत्रापि सत्त्वादिति भावः। ञ्यङमुदाहरति। **आम्बष्ठ्येति** ॥ आम्बष्ठस्यापत्यं स्त्री इत्यर्थः। 'वृद्धेत्कोसल' इति ञ्यङ्। आम्बष्ठ्यशब्दाच्चाप्। गोत्रत्वेन जातित्वात् ङीषि प्राप्ते चाप्। ष्यङमुदाहरति। **कारीषगन्ध्येति** ॥ करीषं गवादिपशुपुरीषं, तस्येव गन्धो यस्य सः करीषगन्धिः। 'उपमानाच्च' इति गन्धस्य इकारोऽन्तादेशः। करीषगन्धेः गोत्रापत्यं स्त्री इत्यर्थे अण्प्रत्ययः। 'अणिञोरनार्षयोः' इति तस्य ष्यङादेशः। कारीषगन्ध्यशब्दात् गोत्रत्वेन जातित्वात् ङीषि प्राप्ते चाप्। **षाद्यञः इति** ॥ षकारात् परो यो यञ् तदन्तादपि चाबित्यर्थः। **शार्कराक्ष्येति** ॥ शर्कराक्षस्यापत्यं स्त्रीत्यर्थः। **पौतिमाष्येति** ॥ पूतिमाष-

## ५२९ । आवट्याच्च । (४-१-७५)

अस्माच्चाप्स्यात् । 'यञश्च' (सू ४७१) इति ङीपोऽपवादः । अवटशब्दो गर्गादिः । आवट्या ।

## ५३० । तद्धिताः । (४-१-७६)

आपञ्चमसमाप्तेरधिकारोऽयम् ।

## ५३१ । यूनस्तिः । (४-१-७७)

युवन्शब्दात्तिप्रत्ययः स्यात्, स च तद्धितः । लिङ्गविशिष्टपरिभाषया सिद्धे तद्धिताधिकार उत्तरार्थः । युवतिः । अनुपसर्जनादित्येव । बहवो युवानो यस्यां सा बहुयुवा । युवतीति तु यौतेः शत्रन्तान्ङीपि बोध्यम् ।

इति स्त्रीप्रत्ययप्रकरणम् ।

स्यापत्यं स्त्रीत्यर्थः । 'गर्गादिभ्यो यञ्' इत्युभयत्र यञ् । **आवट्याच्च** ॥ ननु कथमवटशब्दस्य यञन्तत्वमित्यत आह । **अवटशब्दः इति** ॥ **आवट्येति** ॥ अवटस्यापत्यं स्त्रीत्यर्थः । गर्गादियञि 'यस्येति च' इत्यकारलोपे आदिवृद्धौ आवट्यशब्दात् चाप् । **तद्धिताः** ॥ वक्ष्यमाणाः प्रत्ययाः तद्धितसंज्ञकाः प्रत्येतव्या इत्यर्थः । अधिकारसूत्रमेतत् । उत्तरावधिमाह । **आपञ्चमेति** ॥ **यूनस्तिः** ॥ तद्धिताः इत्यनुवृत्तमेकवचनेन विपरिणम्यते । तदाह । **युवन्शब्दात् तिप्रत्ययस्स्यात् स च तद्धितः इति** ॥ स्त्रियामिति शेषः । 'समर्थानाम्' इत्यतः प्राक् तदधिकारस्योक्तत्वादिति भावः । नान्तलक्षणङीपोऽपवादः । नन्वत्र तद्धितग्रहणानुवृत्तिर्व्यर्था । नच 'कृत्तद्धित' इति प्रातिपदिकत्वार्थे तदनुवृत्तिरिति वाच्यम् । प्रातिपदिकत्वाभावेऽपि लिङ्गविशिष्टपरिभाषया तिप्रत्ययान्तात् सुबुत्पत्तिसिद्धेरित्यत आह । **लिङ्गविशिष्टेति** ॥ **युवतिरिति** ॥ स्वादिष्विति पदत्वात् 'न लोप इति नकारलोपः । **अनुपसर्जनादित्येवेति** ॥ अनुवर्तत एवेत्यर्थः । **बहुयुवेति** ॥ उपसर्जनत्वात्तिप्रत्ययाभावे नान्तलक्षणङीपः 'अनो बहुव्रीहेः' इति निषेधे 'डाबुभाभ्याम्' इति डापि च रूपम् । ननु युवतीभिः परिवृतः इत्यादौ कथं युवतीशब्द ईकारान्तः इत्यत आह । **युवतीति त्विति** ॥ 'यु मिश्रणे' इत्यस्माल्लटश्शतरि, शपो लुकि, उवङि, उगित्त्वान्ङीपि युवतीशब्दो व्युत्पन्नो बोध्यः इत्यर्थः । पतिं सुखेन मिश्रयन्ती योषिदुच्यते । अन्ये तु युधातोरौणादिके बाहुलकात्तिप्रत्यये कित्त्वात् गुणाभावे उवङि उगित्त्वात ङीपि युवतीशब्दः सिध्यतीत्याहुः ॥

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां स्त्रीप्रत्ययनिरूपणं समाप्तम् ।

---

श्रीरस्तु ।

# ॥ अथ कारकप्रकरणम् ॥

## अथ प्रथमा विभक्तिः ।

### ५३२ । प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा । (२-३-४६)

नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये संख्यामात्रे च प्रथमा स्यात् । उच्चैः ।

अथ कारकप्रकरणप्रारम्भः । तदेवं 'ङ्याप्प्रातिपदिकात्' इत्यधिकृत्य विहिताः स्वादिप्रत्ययास्सप्रपञ्चन्निरूपिताः । तत्र प्रथमादिसप्तम्यन्तसप्तविभक्तीनामर्थविशेषव्यवस्थान्दर्शयितुमुपक्रमते । **प्रातिपदिकार्थेति** ॥ ननु प्रवृत्तिनिमित्तं व्यक्तिश्चेति द्विकं प्रातिपदिकार्थः, प्रवृत्तिनिमित्तं व्यक्तिः लिङ्गं सङ्ख्या चेति चतुष्कं प्रातिपदिकार्थः, प्रवृत्तिनिमित्तं व्यक्तिः लिङ्गं सङ्ख्या कारकञ्चेति पञ्चकं प्रातिपदिकार्थः, इत्येते पक्षाः 'सरूपाणामेकशेष एकविभक्तौ, स्त्रियाम्' इत्यादिसूत्रेषु भाष्ये स्थिताः मञ्जूषायां प्रपञ्चिताश्च । तत्र त्रिकादिपक्षेषु लिङ्गस्यापि प्रातिपदिकार्थत्वात् पृथग्ग्रहणं व्यर्थमित्यत आह । **नियतेति** ॥ नियता उपस्थितिर्यस्येति विग्रहः । यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स तदर्थ इत्यर्थः । एवञ्च तटः तटी तटम् इत्याद्यनियतलिङ्गेषु नियमेन कस्यापि लिङ्गस्योपस्थित्यभावात् प्रातिपदिकार्थशब्देनाग्रहणात् पृथक् लिङ्गग्रहणमावश्यकमिति भावः । मात्रशब्दस्य वचनशब्देनैवान्वयभ्रमं वारयति । **मात्रशब्दस्येति** ॥ प्रातिपदिकार्थश्च लिङ्गञ्च परिमाणञ्च वचनञ्चेति द्वन्द्वः । प्रातिपदिकार्थलिङ्गपरिमाणवचनान्येव प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रमित्यस्वपदविग्रहः । मात्रशब्दोऽवधारणे । "मात्रं कार्त्स्न्येऽवधारणे" इत्यमरः । 'मयूरव्यंसकादयश्च' इति नित्यसमासः । मात्रशब्दस्य द्वन्द्वान्ते श्रूयमाणत्वात् प्रातिपदिकार्थे, लिङ्गे, परिमाणे, वचने च, प्रत्येकमन्वय इत्यर्थः । वचनं सङ्ख्येति वक्ष्याति । ननु प्रातिपदिकार्थमात्रे लिङ्गमात्रे परिमाणमात्रे सङ्ख्यामात्रे च प्रथमेत्यनुपपन्नम् । लिङ्गादीनां केवलानां प्रातिपदिकार्थं विना क्वाप्यनुपस्थितेरित्याशङ्क्य अत एव बाधकात् लिङ्गमात्रे अधिके इति विवक्षितमित्यभिप्रेत्य व्याचष्टे। **लिङ्गमात्राद्याधिक्ये इति** ॥ लिङ्गमात्राधिक्ये परिमाणमात्राधिक्ये चेत्यर्थः । प्रातिपदिकार्थमात्रे इत्यस्योदाहरति । **उच्चैरित्यादि** ॥ नन्वव्ययेषु 'सामान्ये नपुंसकम्' इति नपुंसकत्वस्य च कृष्णशब्दे पुंस्त्वस्य च श्रीशब्दे स्त्रीत्वस्य च ज्ञानशब्दे नपुंसकत्वस्य च

नीचैः । कृष्णः । श्रीः । ज्ञानम् । अलिङ्गा नियतलिङ्गाश्च प्रातिपदिकार्थमात्रे इत्यस्योदाहरणम् । अनियतलिङ्गास्तु लिङ्गमात्राद्याधिक्यस्य । तटः—तटी—तटम् । परिमाणमात्रे द्रोणो व्रीहिः । द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः । प्रत्ययार्थे परिमाणे प्रकृत्यर्थोऽभेदेन संसर्गेण विशेषणम्,

---

भानात् कथं प्रातिपदिकार्थस्योदाहरणान्येतानीत्यत आह । **अलिङ्गा इत्यादि** ॥ 'अव्ययादाप् सुपः' इति सूत्रे 'आब्ग्रहणं व्यर्थमलिङ्गत्वात्' इति भाष्योक्तरीत्या अव्यये कस्यापि लिङ्गस्यानुपस्थितिरिति प्रातिपदिकार्थमात्रे इत्यस्य भवत्यव्ययमुदाहरणम् । कृष्णशब्दे पुंस्त्वस्य श्रीशब्दे स्त्रीत्वस्य ज्ञानशब्दे नपुंसकत्वस्य च नियमेन भानमस्ति । तेषां नियतलिङ्गत्वात् । अतस्तेषु लिङ्गानामपि प्रातिपदिकार्थान्तर्भावात् तेषामपि प्रातिपदिकार्थमात्रे इत्युदाहरणत्वं निर्बाधमिति भावः । यद्यपि कृष्णः पटः, कृष्णा पटी, कृष्णं वस्त्रम्' इत्यादौ कृष्णशब्दस्त्रिलिङ्गः । तथापि भगवत्पर एवात्र कृष्णशब्दो विवक्षित इति भावः । नच प्रातिपदिकोक्तार्थे किं प्रथमयेति वाच्यम् । एकत्वादिसङ्ख्याबोधार्थत्वात् । नचाव्ययात् प्रथमोत्पत्तेः फलाभावः । 'अव्ययादाप् सुपः' इति लुकोऽवश्यं प्रवृत्तेरिति वाच्यम् । पदत्वार्थं सुबुत्पत्तेरावश्यकत्वात् । तेन उच्चैरित्यादौ रुत्वविसर्गौ 'उच्चैस्ते सम्यगुच्चारणम्' इत्यादौ तेमयादिसिद्धिश्च भवति । **अनियतेति** ॥ अनियतलिङ्गास्तु तटादिशब्दाः लिङ्गमात्राधिक्यस्योदाहरणम् । तत्र लिङ्गानामनियतोपस्थितिकतया प्रातिपदिकार्थानन्तर्भावादित्यर्थः । **तटः तटी तटमिति** ॥ "तटं त्रिषु" इत्यमरः । **परिमाणमात्रे इति** ॥ उदाहरणं वक्ष्यते इत्यर्थः । **द्रोणो व्रीहिरिति** ॥ द्रोणः परिमाणविशेषः । "जालसूर्यमरीचिस्थं त्रसरेणुरिति स्मृतम् । तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ॥ गौरस्तु ते त्रयष्षट् ते यवो मद्ध्यस्तु ते त्रयः । कृष्णलः पञ्च ते माषः ते सुवर्णस्तु षोडश ॥ पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तितम् । पलद्वयन्तु प्रसृतं द्विगुण कुडबं मतम् ॥ चतुर्भिः कुडबैः प्रस्थः प्रस्थाश्चत्वार आढकः । आढकैस्तैश्चतुर्भिस्तु द्रोण इत्यभिधीयते ॥ कुम्भो द्रोणद्वयं शूर्पः खारी द्रोणास्तु षोडश ।" इति स्मरणात् । **व्रीहिरिति** ॥ जातावेकवचनम् । 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' इति वचनात् । व्रीहिराशिरिति यावत् । नह्येकस्याः व्रीहिव्यक्तेः द्रोणपरिमाणं सम्भवति । ननु द्रोणाख्यपरिमाणविशेषस्य व्रीहिव्यक्तेश्च कथमभेदान्वयः । धर्मधर्मिणोर्भेदादित्यत आह । **द्रोणरूपमिति** ॥ तथाचाभेदान्वयस्य बाधादेव द्रोणपरिमाणस्य व्रीहिव्यक्तेश्च परिच्छेद्यपरिच्छेदकभावेनान्वयाभ्युपगमान्नोक्तदोष इति भावः । ननु द्रोणशब्दस्य परिमाणविशेषवाचिनो नियतपुल्लिँङ्गत्वे प्रातिपदिकार्थमात्रे इत्येव सिद्धम् । यदि तु 'अस्त्रियामाढकद्रोणौ' इति द्विलिङ्गता, तर्हि लिङ्गमात्राद्याधिक्ये इत्येव सिद्धम्, तत् किं परिमाणग्रहणेनेति चेत्तत्राह । **प्रत्ययार्थे परिमाणे इति** ॥ न हि द्रोणत्वेन रूपेण परिमाणविशेषवाचिद्रोणशब्दात् स्वार्थे प्रथमा विभक्तिरिष्यते, येन प्रातिपदिकार्थमात्रे इत्यनेन गतार्थता स्यात् । किन्तु द्रोणत्वेन परिमाणवाचिनो द्रोणशब्दात् परिमाणत्वसामान्यरूपेण द्रोणपरिमाणे विवक्षिते प्रथमा विभक्तिर्विधी-

प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणमिति विवेकः। वचनं संख्या। एकः। द्वौ। बहवः। इहोक्तार्थत्वाद्विभक्तेरप्राप्तौ वचनम्।

## ५३३। सम्बोधने च। (२-३-४७)

इह प्रथमा स्यात्। हे राम।

इति प्रथमा विभक्तिः।

---

यते। ततश्च प्रत्ययार्थे परिमाणसामान्ये द्रोणशब्दार्थात्मकप्रकृत्यर्थः परिमाणविशेषः सामान्यविशेषात्मकाभेदसंसर्गेणान्वेति। परिमाणसामान्यात्मकप्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहावन्वेति। तथाच द्रोणाख्यपरिमाणविशेषात्मकं यत् परिमाणं तत्परिच्छिन्नो व्रीहिरिति बोधः फलति। अन्यथा द्रोणाख्यपरिमाणविशेषपरिच्छिन्नो व्रीहिरित्येव बोधस्स्यात्। परिमाणत्वसामान्यं न प्रतीयेत। तदर्थमिह परिमाणग्रहणमित्यर्थः। **वचनं सङ्ख्येति**॥ पूर्वाचार्यैस्तथा संज्ञाकरणादिति भावः। तथाच सङ्ख्यामात्रे प्रथमेति लभ्यते। नच लिङ्गमात्राद्याधिक्ये परिमाणमात्राधिक्ये इतिवत् सङ्ख्यामात्राधिक्ये इति कुतो न व्याख्यातमिति वाच्यम्। केवललिङ्गपरिमाणयोः क्वाप्युपस्थित्यभावेन तथा व्याख्यानेऽपि एकद्विबहुशब्देष्वेकत्वद्वित्वबहुत्वानां केवलानान्नियतोपस्थितिसत्त्वेन सङ्ख्यामात्रे इत्येव व्याख्यातुमुचितत्वात्। अत एव भाष्ये वचनग्रहणस्य एकः द्वौ बहवः इत्युदाहृतम्। ननु एकः द्वौ बहवः इत्यत्र एकत्वद्वित्वबहुत्वानां नियमेनोपस्थित्या 'प्रातिपदिकार्थे' इत्येव सिद्धे वचनग्रहणं व्यर्थमित्यत आह। **इहेति**॥ प्रकृतिभिरेवैकत्वादीनामुक्तत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायेन प्रथमाविभक्तेरप्राप्तौ तदर्थं वचनग्रहणमित्यर्थः। तथाच विभक्तिरिहानुवादशब्दसाधुत्वार्थं प्रयोज्या। 'न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्ययः' इति अनभिहितसूत्रभाष्यसिद्धन्यायादिति भावः। इदमेवाभिप्रेत्योक्तं भाष्ये। 'उक्तेष्वप्येकत्वादिषु प्रथमा' इति। मात्रग्रहणात् कारकाद्याधिक्ये प्रथमा न भवति। अत्र "अर्थे प्रथमा, इत्येव सूत्रयितुमुचितम्" इति प्रौढमनोरमादौ प्रपञ्चितम्। **सम्बोधने च॥ इहेति**॥ सम्बोधने अधिके गम्येऽपि प्रथमा स्यादित्यर्थः। सम्बोधनमभिमुखीकृत्य ज्ञापनम्। **हे रामेति**॥ मां पाहीति शेषः। इह रामं प्रति मद्रक्षणं ज्ञाप्यम्। नच 'हे राजन् सार्वभौमो भव' इत्यत्र सार्वभौमशब्दादपि प्रथमा स्यादिति वाच्यम्। सम्यक् बोधनमेव हि सम्बोधनम्। समित्युपसर्गबलात् श्रोतरि विशिष्य राजत्वादिना ज्ञाते सत्येव तं प्रति कश्चिदर्थो ज्ञापयितुं शक्यः, नान्यथा। ततश्च सम्बोधनविभक्तिरियमनुवाद्यविषयैवेति लभ्यते। न तु विधेयविषया। तथाच सार्वभौमत्वस्य विधेयस्य इदानीमसिद्धत्वेन अनुवाद्यत्वाभावान्न सार्वभौमशब्दात् सम्बोधनविभक्तिरिति मञ्जूषायां विस्तरः॥

इति प्रथमा विभक्तिः।

---

## अथ द्वितीया विभक्तिः ।

## ५३४ । कारके । (१-४-२३)

इत्यधिकृत्य ।

## ५३५ । कर्तुरीप्सिततमं कर्म । (१-४-४९)

**कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् । 'कर्तुः' किम् । माषेष्वश्वं बध्नाति । कर्मण ईप्सिता माषाः, न तु कर्तुः । तमब्ग्रहणं किम् । पयसा ओदनं भुङ्क्ते । 'कर्म' इत्यनुवृत्तौ पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम् । अन्यथा गेहं प्रविशतीत्यत्रैव स्यात् ।**

---

अथ द्वितीया विभक्तिः—**कारके ॥ इत्यधिकृत्येति ॥** संज्ञाः वक्ष्यन्ते इति शेषः । क्रियाजनकं कारकम् । करोति क्रियान्निर्वर्तयतीति भाष्ये व्युत्पत्तिदर्शनात् । ब्राह्मणस्य पुत्रं पश्यतीत्यत्र ब्राह्मणस्यान्यथासिद्धत्वान्न कारकत्वम् । **कर्तुरीप्सित ॥** कारके इत्यनुवर्तते । प्रथमया विपरिणम्यते । आप्तुमिष्यमाणमीप्सितम् । आप्लृ व्याप्तौ, अस्मात् सन्नन्तात् 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः । मतिरिच्छा, बुद्धेः पृथग्ग्रहणात् । 'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी । अतिशयेनेप्सितमीप्सिततमम् । धातूपात्तव्यापाराश्रयः कर्ता । केनाप्तुमित्याकाङ्क्षायां कर्तृविशेषणीभूतव्यापारेणेत्यर्थाल्लभ्यते । फलितमाह । **कर्तुः क्रिययेत्यादिना ॥** क्तप्रत्ययोपात्तं वर्तमानत्वन्तु न विवक्षितम् । तेन कटं करोति, कृतवान्, इत्यादौ नाव्याप्तिः । आप्तिस्सम्बन्धः । एवञ्च कर्त्रा स्वनिष्ठव्यापारप्रयोज्यफलेन सम्बद्धुमिष्यमाणमित्यर्थः । यथा तण्डुलान् पचति इत्यत्र विक्लित्त्यनुकूलव्यापारः पचेरर्थः । तप्तोदकप्रस्वेदनकृतप्रशिथिलावयवकत्वात्मकं मृदुविशदत्वं विक्लित्तिः, तदनुकूलव्यापारः अधिश्रयणोदकासेचनैधोपकर्षणप्रज्वलनादिरूप इति कारके इत्यादिसूत्रभाष्ये स्पष्टम् । अत एव 'फलव्यापारयोर्धातुः' इति सिद्धान्तः । तथाच तण्डुलानधिश्रयणादिव्यापारेण विक्लेदयतीत्यर्थः । अधिश्रयणादिरूपकर्तृव्यापारप्रयोज्यविक्लित्तिरूपफलाश्रयत्वात् तण्डुलानां कर्मत्वम् । ननु कर्तृग्रहणं व्यर्थम् । नच व्यापारलाभाय तदिति वाच्यम् । केनाप्तुमित्याकाङ्क्षायां कारकाधिकारादेव तल्लाभादिति पृच्छति । **कर्तुः किमिति ॥ माषेष्वश्वं बध्नातीति ॥** माषेषु भक्षणाय प्रवृत्त्युन्मुखमुदरव्यधाभयात्तद्भक्षणान्निवर्तयितुमन्यत्र बध्नातीत्यर्थः । अत्र माषाणां कर्मत्वनिवृत्त्यर्थं कर्तृग्रहणमिति भावः । ननु कर्तृग्रहणे कृते कथं नोक्तदोष इत्याह । **कर्मणः ईप्सिताः माषाः, न तु कर्तुरिति ॥** बन्धनकर्मीभूतस्याश्वस्यैवात्र माषाः ईप्सिताः, नतु बन्धनकर्तुः । अश्वरक्षणस्यैव तदपेक्षितत्वादित्यर्थः । **तमब्ग्रहणं किमिति ॥** तमबन्तमीप्सिततममित्येतत् किमर्थं 'कर्तुरुद्देश्यं कर्म' इत्येवास्तु इति प्रश्नः । **पयसा ओदनं भुङ्क्ते इति ॥** पयसा मिश्रमित्यर्थः । यद्यप्यत्र भोक्तुरोदन एव पयसा मिश्रः उद्देश्यः, नतु केवलं पयः, नापि केवल ओदनः । नह्यसौ केवलपयःपानेन तुष्यति,

## ५३६। अनभिहिते। (२-३-१)

इत्यधिकृत्य।

## ५३७। कर्मणि द्वितीया। (२-३-२)

अनुक्ते कर्मणि द्वितीया स्यात्। हरिं भजति। अभिहिते तु कर्मणि 'प्रातिपदिकार्थमात्रे' इति प्रथमैव। अभिधानं च प्रायेण तिङ्कृत्तद्धितसमासैः। तिङ्, हरिः सेव्यते। कृत्, लक्ष्म्या सेवितः। तद्धित, शतेन क्रीतः शत्यः।

---

नापि केवलौदनेन। तथापि यदा भुक्तवानेव पयोलिप्सया पुनरोदनभोजने प्रवर्तते तदेदं प्रत्युदाहरणम्। तत्र यद्यपि पय एव उद्देश्यं भुजिक्रियां प्रति, तथापि भुजिक्रियाकर्मीभूतमोदनं प्रति मिश्रणसाधनतया गुणत्वेनैव तदुद्देश्यं, नतु भोज्यत्वेन। अतस्तत्र पयसो गुणत्वेन ओदनस्य तत्संस्कार्यतया उद्देश्यत्वादोदनस्यैव ईप्सिततमत्वम्, नतु पयसोऽपि। तस्याप्योदन एव ईप्सिततमः, गुणेष्वस्य नानुरोध इति भावः। ननु तमब्ग्रहणं किमर्थम्। 'कर्तुरीप्सितं कर्म' इत्येवास्त्विति वाच्यम्। 'अग्नेर्माणवकं वारयति' इत्यत्र माणवकस्य 'वारणार्थानामीप्सितः' इत्यपादानत्वनिवृत्त्यर्थत्वादिति प्रकृतसूत्रभाष्ये स्थितम्। तदेतद्वारणार्थानामिति सूत्रव्याख्यावसरे स्फुटीभविष्यति। प्राचीनैस्तु कैश्चित् तमब्ग्रहणं किम्, 'पयसा ओदनं भुङ्क्ते' इति ग्रन्थः केवलतमब्ग्रहणप्रयोजनपरतया व्याख्यातः। ते भाष्यविरुद्धत्वादुपेक्ष्याः। ननु 'अधिशीङ्स्थासां कर्म' इत्यतोऽनुवृत्तेरिह कर्मग्रहणं व्यर्थमित्यत आह। **कर्मग्रहणमाधारेति** ॥ अधिशीङित्यत्र हि आधारः इत्यनुवर्तते। इहापि तदनुवृत्तिर्माभूदिति कर्मग्रहणमित्यर्थः। ननु हरिं भजतीत्यादावसम्भवादेव तदनुवृत्तिर्न भविष्यतीत्यत आह। **अन्यथा गेहं प्रविशतीत्यत्रैव स्यादिति** ॥ हरिं भजतीत्यादौ न स्यादित्येवकारार्थः। **अनभिहिते** ॥ **इत्यधिकृत्येति** ॥ द्वितीयादि वक्ष्यते इत्यर्थः। **कर्मणि द्वितीया** ॥ 'अनभिहिते' इत्यनुवृत्तं व्याचष्टे। **अनुक्ते इति। हरिं भजतीति** ॥ तुष्ट्यनुकूलपरिचरणात्मकव्यापारः भजेरर्थः, पूजादिव्यापारेण हरिं तोषयतीत्यर्थः। कर्तृनिष्ठपूजनादिव्यापारप्रयोज्यतुष्टिरूपफलाश्रयत्वाद्धरिः कर्म। हरिनिष्ठतुष्ट्यनुकूलः एकदेवदत्तनिष्ठो वर्तमानो व्यापार इति बोधः। 'भावप्रधानमाख्यातम्' इति निरुक्तकारयास्कवचनात् क्रियाप्रधानन्तिङन्तमिति तदर्थः। एवञ्च हरिनिष्ठतुष्ट्यनुकूलव्यापाराश्रयो देवदत्त इति प्रथमान्तविशेष्यकबोधस्तार्किकसम्मतो नादर्तव्य इति मञ्जूषादौ प्रपञ्चितम्। **अभिहिते त्विति** ॥ हरिस्सेव्यते इत्यादाविति शेषः। **प्रथमैवेति** ॥ तद्विधावनभिहिताधिकाराभावात् 'अभिहिते प्रथमा' इति वार्तिकाच्चेति भावः। अत्र भाष्ये कटं करोति भीष्ममुदारं दर्शनीयं शोभनमित्यत्र कटशब्दादुत्पाद्यमानया द्वितीयया कर्मणोऽभिहितत्वात् भीष्मादिभ्यो द्वितीया न प्राप्नोतीत्याशङ्क्य 'तिङ्कृत्तद्धितसमासैरभिधानम्' इति परिगणितम्। तत्र प्रायेणेत्यध्याहृत्य आह। **अभिधानञ्चेति** ॥ समासैरित्यनन्तरं विवक्षितमिति शेषः। **तिङिति** ॥ अविभक्तिकनिर्देशोऽयं तिङभिधानप्रदर्शनाय। **हरिः सेव्यते इति** ॥ 'लः कर्मणि' इति कर्मणि लकारः। 'भावकर्मणोः' इत्यात्मनेपदम्।

समास, प्राप्तः आनन्दो यं स प्राप्तानन्दः । क्वचिन्निपातेनाभिधानम् । यथा । 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् । सांप्रतमित्यस्य हि युज्यत इत्यर्थः ।

---

तिङन्तेन अभिहितत्वाद्धरेः कर्मणो न द्वितीयेति भावः । हरिं भजतीति वाक्यार्थः । कर्तृकर्मलकारयोरेकरूप एव वाक्यार्थबोध इति वैयाकरणसमयः । **कृदिति** ॥ तिङितिवदयमप्यविभक्तिकनिर्देशस्तदुदाहरणसूचनाय । **लक्ष्म्या सेवितः इति** ॥ हरिरिति शेषः । भूते कर्मणि क्तः, कर्तरि तृतीया । लक्ष्मीनिष्ठपरिचरणजनिततुष्ट्याश्रयो हरिरिति बोधः । 'सत्त्वप्रधानानि नामानि' इति यास्कस्मृतिमनुरुध्य प्रातिपदिकेषु प्रथमान्तोपात्तविशेष्यकबोधस्यैव सर्वसम्मतत्वात् । अत्र सेवितहरेः कर्मणः कृता अभिहितत्वान्न द्वितीया । **तद्धितेति** ॥ अयमप्यविभक्तिकनिर्देशस्तदुदाहरणसूचनाय । **शतेन क्रीतः शत्यः इति** ॥ पटादिरिति शेषः । 'शताच्च ठन्यतावशते' इति यत्प्रत्ययस्ताद्धितः । अत्र कर्मणस्ताद्धितेनोक्तत्वान्न द्वितीया । **समासेति** ॥ अयमप्यविभक्तिकनिर्देशस्तदुदाहरणसूचनाय । **प्राप्तानन्दः इति** ॥ देवदत्तादिरिति शेषः । 'गत्यर्थाकर्मक' इत्यादिना प्राप्तेति कर्तरि क्तः । अन्यपदार्थस्य कर्मणः बहुव्रीहिसमासेनाभिहितत्वान्न द्वितीयेति भावः । आनन्दकर्तृकप्राप्तिकर्मीभूत इति बोधः । प्रायेणेत्यस्य फलन्दर्शयति । **क्वचिदिति ॥ विषवृक्षोऽपीति** ॥ असाम्प्रतमित्यत्रान्वेति । संवर्ध्येत्यत्र छेत्तुमित्यत्र चान्वये द्वितीयापत्तेः । तत्र त्वर्थाद्विषवृक्षमिति गम्यते । न साम्प्रतमिति विग्रहे नञ्तत्पुरुषः । **युज्यत इत्यर्थः इति** ॥ युजिर्योगे कर्मणि लकारः । औचित्या न युज्यते । औचित्ययुक्तो न भवतीति यावत् । "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः । अत्र वृक्षस्य कर्मणो निपातेनाभिहितत्वान्न द्वितीयेति भावः । वस्तुतस्तु छेत्तुमिति तुमुन्नत्र दुर्लभः । कृष्णं द्रष्टुं यातीत्यत्रेव क्रियार्थक्रियोपपदत्वाभावेन 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इत्यस्याप्रवृत्तेः । 'शकधृष' इत्यादिनापि तुमुन्न, शकादियोगाभावात् । किन्तु 'इच्छार्थेषु' इत्यनुवृत्तौ 'समानकर्तृकेषु तुमुन्' इति तुमुन् । अक्रियार्थोपपदत्वेऽपि तस्य प्रवृत्तेः । यथा इच्छति भोक्तुमित्यादि । एवञ्च तुमुनस्साधुत्वाय इष्यते इत्यध्याहार्यम् । विषवृक्षोऽपि संवर्ध्य छेत्तुम् इष्यते इति यत् तदसाम्प्रतम् अयुक्तमित्यर्थः । "एवञ्चात्रापि तिङाभिहितत्वादेव द्वितीयानिवारणात् कृत्तद्धितसमासैरभिधानम् इति परिगणनवार्तिके प्रायेणेत्यध्याहारो विफलः" इति शब्देन्दुशेखरे स्थितम् । पक्वमोदनं भुङ्क्ते इत्यत्र तु पचिभुजिक्रियानिरूपिते द्वे कर्मत्वशक्ती । तत्र गुणभूतपचिनिरूपितकर्मत्वशक्तेः क्तप्रत्ययाभिहितत्वेऽपि प्रधानभूतभुजिक्रियानिरूपितामनभिहितां कर्मत्वशक्तिमादाय द्वितीया निर्बाधेति भाष्ये स्पष्टम् । ननु यथा बहुपटुरित्यादौ तद्धितेन बहुच्प्रत्ययेन उक्तत्वात् कल्पबादयो नभवन्ति, तथा क्रियते कटः इत्यादावपि तिङादिभिरुक्तत्वात् द्वितीयादयो न भविष्यन्ति । 'उक्तार्थानामप्रयोगः' इति न्यायात् । किञ्च कटं करोतीत्यादौ सावकाशा द्वितीया कृतः कटः इत्यादौ न भवत्येव । अनवकाशया प्रथमया बाधात् । नच वृक्षः प्लक्षः इत्यादिः प्रथमायाः अवकाश इति वाच्यम् । तत्र गम्यामस्तिक्रियां प्रति कर्तृत्वे तृतीयाप्रसङ्गात् । अस्तु वा तत्र प्रथमाया अवकाशः । तथाप्युभयोस्सावकाशत्वे परत्वात् प्रथमैव

## ५३८। तथायुक्तं चानीप्सितम्। (१-४-५०)

ईप्सिततमवत्क्रियया युक्तमनीप्सितमपि कारकं कर्मसंज्ञं स्यात्। ग्रामं गच्छंस्तृणं स्पृशति। ओदनं भुञ्जानो विषं भुङ्क्ते।

## ५३९। अकथितं च। (१-४-५१)

अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्।

---

स्यात्। एवञ्चानभिहिताधिकारो व्यर्थ इति चेन्नैवम्। 'कर्मणि द्वितीया' इत्यादीनां 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इत्यनयोश्च एकवाक्यतया कर्मणि यदेकत्वं द्वित्वं बहुत्वं वा तत्र एकद्विबहुवचनानीति लभ्यते। तत्र 'अनभिहिते' इत्यारम्भे अनभिहिते कर्मणि यदेकत्वं तत्र द्वितीयेत्येवमर्थस्स्यात्। 'अनभिहिते' इत्यभावे तु कर्मणि यदेकत्वन्तत्र द्वितीयैकवचनमित्येव पर्यवस्येत्। तथा सति कृतः कट इत्यादौ क्तेन कर्ममात्रोक्तावपि तदेकत्वस्यानुक्ततया द्वितीयैकवचनन्दुर्वारं स्यात्। नच प्रथमाया निरवकाशत्वं शङ्क्यम्। नीलमिदन्नतु रक्तमित्यादौ विशेषणान्तरनिवृत्तितात्पर्यके अस्तिक्रियायाः अनावश्यकत्वेन तत्र प्रथमायास्सावकाशत्वात्। नापि तत्र परत्वात् प्रथमैव भविष्यतीति वाच्यम्। कर्तव्यः कट इत्यादौ ततोऽपि परत्वेन कृद्योगलक्षणषष्ठीप्रसङ्गात्। एवञ्च सङ्ख्या विभक्त्यर्थ इति पक्षे 'अनभिहिते' इत्यारब्धव्यम्। यदि तु पञ्चकं प्रातिपदिकार्थः इत्यनाश्रित्य कारकं विभक्त्यर्थ इत्याश्रीयते तदा कारकस्य क्तप्रत्ययादिनोक्तत्वान्न द्वितीयादिविभक्तिप्रसक्तिः। एकत्वादिसङ्ख्याबोधश्च प्रातिपदिकार्थमात्रे प्रवृत्तया प्रथमयैव सम्भवति। अतः 'अनभिहिते' इति नारब्धव्यमिति भाष्यकैयटकौस्तुभादिषु स्पष्टम्। अतिविस्तरस्तु मञ्जूषायामनुसन्धेयः। **तथायुक्तञ्चानीप्सितम्॥** तथाशब्दस्य सादृश्यवाचकस्य प्रतियोगिसापेक्षत्वादाह। **ईप्सिततमवदिति॥** पूर्वसूत्रे सन्निहितत्वादीप्सिततममेव सादृश्यप्रतियोगीति भावः। **क्रिययेति॥** क्रियाजन्यफलयुक्तमित्यर्थः। पूर्वसूत्रे ईप्सिततमस्य कर्मत्वमुक्तम्। द्वेष्योपेक्ष्यसङ्ग्रहार्थमिदं वचनम्। तत्र उपेक्ष्यमुदाहरति। **ग्रामं गच्छंस्तृणं स्पृशतीति॥** संयोगानुकूलव्यापारः स्पृशेरर्थः। अत्र स्पृश्यमानस्य तृणस्य ईप्सिततमत्वाभावेऽपि गङ्गां स्पृशतीत्यादौ स्पृश्यमानस्येप्सिततमस्य गङ्गादेरिव क्रियाजन्यसंयोगात्मकफलाश्रयत्वात्कर्मत्वमिति भावः। द्वेष्यमुदाहरति। **विषं भुङ्क्त इति॥** यदा कश्चिद्बलवता वैरिणा निगृह्यमाणो विषं भुङ्क्ते तदेदमुदाहरणम्। भुजेर्हि मुखे प्रक्षिप्तस्य गळविवरप्रवेशानुकूलः हनुचलनादिव्यापारोऽर्थः। विषस्य द्वेष्यतया ईप्सिततमत्वाभावेऽपि ओदनं भुङ्क्ते इत्यादौ भुज्यमानस्य ईप्सिततमस्य ओदनादेरिव क्रियाजन्यगळविवरप्रवेशात्मकफलाश्रयत्वात् कर्मत्वमिति भावः। नच 'धातूपस्थाप्यफलशालि कर्म' इत्येवास्तु, किमीप्सितानीप्सितयोः पृथक् ग्रहणेनेति वाच्यम्। अग्नेर्माणवकं वारयतीत्यत्र हि 'वारणार्थानामीप्सितः' इति माणवकस्यापादानत्वं प्राप्तं तन्निवृत्त्यर्थं 'कर्तुरीप्सिततमम्' इति वक्तव्यमेव। एवञ्च द्वेष्योदासीनसङ्ग्रहार्थं 'तथायुक्तञ्च' इति सूत्रमावश्यकमित्यास्तान्तावत्। **अकथितञ्च॥** अकथितशब्दं व्याचष्टे। **अपादानादिविशेषैरिति॥** अपादानं सम्प्रदानम् अधि-

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ।

'दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाकथितं कर्म' इति परिगणनं कर्तव्यमित्यर्थः । गां दोग्धि पयः । बलिं याचते

---

करणं कर्म करणं कर्ता हेतुः इति कारकसप्तकम् । तदेतद्यदा अपादानत्वादिविशेषात्मना न विवक्षितं किन्तु सम्बन्धसामान्यात्मनैव तदा तत्कर्मसंज्ञकमित्यर्थः । ननु 'नटस्य शृणोति गाथाम्' इत्यत्र गाथाकर्मकं नटसम्बन्धि श्रवणमित्यर्थकेन नटस्यापि कर्मत्वं स्यात् । तस्य क्रियान्वयित्वेन कारकत्वात् । वस्तुतः अपादानस्य सम्बन्धत्वेन विवक्षितत्वाच्चेत्याशङ्क्य परिगणयति । **दुह्याजिति** ॥ वार्तिकार्थसङ्ग्रहश्लोकोऽयम् । अतो व्याचष्टे । **दुहादीनामिति** ॥ दुह प्रपूरणे, टु याचृ याच्ञायाम्, डु पचष् पाके, दण्ड दण्डनिपातने । चुरादिः निग्रह इत्यर्थः । इह ग्रहणार्थकः । रुधिर् आवरणे, प्रच्छ ज्ञीप्सायाम् । श्लोके प्रच्छीत्यत्रेकार उच्चारणार्थः । इका निर्देशे तु 'ग्रहिज्या' इति सम्प्रसारणप्रसङ्गात् । चिञ् चयने, ब्रूञ् व्यक्तायां वाचि, शासु अनुशिष्टौ, जि अभिभवे, मन्थ विलोडने, मुष स्तेये, इति द्वादशानामित्यर्थः । **चतुर्णामिति** ॥ णीञ् प्रापणे, हृञ् हरणे, कृष विलेखने, वह प्रापणे, इति चतुर्णामित्यर्थः । **कर्मणा यद्युज्यते इति** ॥ कर्मयुगित्यस्य व्याख्यानमिदम् । करणे उपपदे कर्मणि वाच्ये 'सत्सूद्विष' इत्यादिना क्विबिति भावः । यद्यपि "दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ । ब्रुविशासिगुणेन च यत् स च ते तदकीर्तितमाचरितं कविना" इति प्रकृतसूत्रस्थश्लोकवार्तिके पचिमथिमुष्यादयो न पठिताः । तथापि चकारेण तेऽपि सङ्ग्राह्या इति कैयटः । **गां दोग्धि पयः इति** ॥ क्षरणानुकूलव्यापारः क्षारणपर्यायो दुहेरर्थः । क्षारणात्मकव्यापारप्रयोज्यक्षरणात्मकफलाश्रयत्वात्पयः कर्म । गौस्तु क्षरणे अपादानम् । तदपादानत्वमुपेक्ष्य सम्बन्धत्वात्मना गोर्विवक्षायां कर्मत्वमनेन भवति । ततश्च शेषषष्ठीनिरासे द्वितीया भवति । तादिदमुक्तं प्रौढमनोरमायाम् । गोसम्बन्धि पयःकर्मकन्दोहनमर्थ इति । तथाच न माषाणामश्नीयादित्यत्रेव शेषत्वविवक्षायां प्राप्तां षष्ठीं बाधितुमिदं सूत्रम् । गोरपादानत्वविवक्षायान्तु पञ्चम्येव, गोः पयो दोग्धीति । गोसकाशात् पयः क्षारयतीत्यर्थः । यदि तु गौः पयोविशेषणं तदा षष्ठ्येव । गोसम्बन्धि यत्पयः तत् क्षारयतीत्यर्थः । एवमग्रेऽप्यूह्यमिति प्राचीनमतानुसारी पन्थाः । वस्तुतस्तु अपादानत्वादिविशेषरूपेणाविवक्षितं किन्तु कर्मत्वेनैव विवक्षितम् अकथितम् । तादृशमपादानादि कर्मसंज्ञकं स्यादित्यर्थः । कारकत्वव्याप्यसंज्ञानां स्वबोध्ये कर्मत्वादिशक्तिमत्त्वबोधकत्वात् बोधोऽपि तथैव । एवञ्च गान्दोग्धि पयः इत्यत्र गोकर्मकं पयःकर्मकञ्च दोहनमित्येव बोधः । अवधेस्सकाशाद्द्रवद्रव्यविभागो हि क्षरणम् । तच्च गोपनिष्ठव्यापारप्रयोज्यम् । एवञ्च कर्तृव्यापारप्रयोज्यक्षरणात्मकविभागविशेषाश्रयत्वात् गोः पयसश्च पूर्वसूत्राभ्यां कर्मत्वमस्त्येव । अतः उभयकर्मकबोध एव युक्तः, नतु सम्बन्धत्वेन गोर्बोधः । अत एव प्रकृतसूत्रभाष्ये

---

१ इदं च १०९०, ११०० वार्तिकादिसिद्धम् ।

**वसुधाम् । अविनीतं विनयं याचते । तण्डुलानोदनं पचति । गर्गाञ्छतं दण्डयति । व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमपचिनोति**

---

'अकथितम्' इत्यनेनैव सिद्धत्वात् पूर्वसूत्रद्वयस्य वैयर्थ्यमाशङ्क्य ईप्सितमात्रस्याप्यनेन कर्मसंज्ञायां 'वारणार्थानाम्' इत्यस्यानवकाशतया अग्नेर्माणवकं वारयतीत्यत्र माणवकस्यापादानसंज्ञायां प्राप्तायां 'कर्तुरीप्सिततमं कर्म' इत्यारब्धव्यम् । ततश्च द्वेष्योपेक्ष्यसङ्ग्रहाय 'तथायुक्तञ्चानीप्सितम्' इत्यारब्धव्यमिति समाहितम् । एतेन कर्मसंज्ञा सर्वा सिद्धा भवति। अकथितेन तत्रेप्सितस्य किं स्यात् प्रयोजनं कर्मसंज्ञायाः । यत्त्वकथितं पुरस्तादीप्सितयुक्तञ्च तस्य सिद्ध्यर्थम् । ईप्सितमेव तु यत्स्यात्तस्य भविष्यत्यकथितेनेति श्लोकद्वयेनेति शब्देन्दुशेखरे स्थितम् । एतेन कर्मेत्यादिभाष्यार्थस्तु कैयटे भाष्यप्रदीपोद्द्योते च स्पष्ट इत्यास्तान्तावत् । **बलिं याचते वसुधामिति** ॥ हरिरिति शेषः । बलिर्नामासुरविशेषः । मह्यन्देहीति प्रार्थना याचेरर्थः । दानानुकूलो मह्यन्देहीति शब्दप्रयोगरूपव्यापार इति यावत् । बलिकर्तृकं वसुधाकर्मकं दानं प्रार्थयते इत्यर्थः । कर्तुः कर्मत्वविवक्षायां द्वितीयेति नव्याः । प्रार्थनारूपव्यापारजन्यदाने जनकतया आश्रयत्वात् । बलिसम्बन्धि यद्वसुधाकर्मकं दानं तत् प्रार्थयत इत्यर्थ इति तु प्राचीनाः । **अविनीतं विनयं याचते इति** ॥ अभ्युपगमप्रार्थना याचेरर्थः। यदा कश्चिद्बलवान् अविनीतः दुर्बलं कञ्चिद्बाधते तदा दुर्बलमधिकृत्येदं वाक्यं प्रवृत्तम् । अविनीतकर्तृकं विनयकर्मकमभ्युपगमं प्रार्थयत इत्यर्थः । कर्तुः कर्मत्वविवक्षायां द्वितीयेति नवीनाः। अविनीतसम्बन्धिकमिति तु प्राचीनाः । **तण्डुलानोदनं पचतीति** ॥ विक्लित्त्यनुकूलव्यापारः पचेरर्थः । तप्तोदकप्रस्वेदनजनितप्रशिथिलावयवकत्वात्मकं मृदुविशदत्वं विक्लित्तिः । तया ओदनाख्यद्रव्यान्तरं प्रकृतिभूतेषु तण्डुलेषु समवेतं निष्पद्यते इति स्थितिः। तत्र शिथिलावयवसंयोगविशेषात्मिका विक्लित्तिस्समवायसम्बन्धेन तण्डुलेषु वर्तते । ओदने तु जन्यजनकभावेन वर्तते । तण्डुलैः प्रकृतिभूतैः ओदनं करोतीत्यर्थः । तण्डुलसमवायिकारणिकान्तत्समवेतौदनजनिकां विक्लित्तिं निर्वर्तयतीत्यर्थः । तत्र व्यापारफलं विक्लित्तिं प्रति जन्यतया आश्रयत्वात् ओदनः प्रधानं कर्म । तादृशौदनजनिकां विक्लित्तिं प्रति समवायित्वेनाधारत्वात् तण्डुलानां गुणकर्मत्वमिति तद्विवक्षायां द्वितीया । तण्डुलसम्बन्धिनीमोदनजनिकां विक्लित्तिं निर्वर्तयतीति तु प्राचीनाः । **गर्गान् शतं दण्डयतीति** ॥ दण्डधातुः ग्रहणानुकूलव्यापारार्थकः । ताडनादिना गर्गेभ्यस्सुवर्णशतं गृह्णातीत्यर्थः । ताडनादिव्यापारप्रयोज्यग्रहणविषयत्वात् शतं प्रधानकर्म । गर्गाणान्तु तद्ग्रहणावधिकत्वात् गुणकर्मत्वम् । ग्रहणं हि परकीयद्रव्यस्य परस्वत्वनिवृत्तिपूर्वकं स्वीकरणम् । तत्र स्वत्वविश्लेषे गर्गाणामवधित्वात् अपादानत्वम् । ग्रहणघटकतादृशविश्लेषप्रतियोगिभूतस्वत्वाश्रयत्वात् कर्मत्वञ्च । तत्रापादानत्वमनादृत्य कर्मत्वविवक्षायां द्वितीया । गर्गसम्बन्धिकमिति तु प्राञ्चः । **व्रजमवरुणद्धि गामिति** ॥ निर्गमप्रतिबन्धपूर्वकयात्किञ्चिदधिकरणकचिरस्थित्यनुकूलबन्धनद्वारपिधानादिव्यापारो रुधेरर्थः । गान्निर्गमप्रतिबन्धपूर्वकं व्रजे चिरस्थितिकां करोतीत्यर्थः । अत्र चिरास्थितिं प्रति व्रजस्याधिकरणत्वमुपेक्ष्य गोद्वारा तत्स्थित्याश्रयतया कर्मत्वविवक्षायां द्वितीया । व्रजसम्बन्धिनं गोकर्मकं चिरस्थित्यनुकूलव्यापारं करोतीत्यर्थ इति

फलानि । माणवकं धर्मं ब्रूते—शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति—हरति—कर्षति—

---

प्राचीनाः । **माणवकं पन्थानं पृच्छतीति** ॥ जिज्ञासितव्यार्थज्ञानानुकूलः केन पथा गन्तव्यमित्यभिलापादिरूपव्यापारः प्रच्छेरर्थः । तत्र विषयतया ज्ञानरूपफलाश्रयत्वात् पन्थाः प्रधानकर्म । तद्ज्ञानं प्रति जनकतया आश्रयत्वात् माणवको गुणकर्म । माणवकेन पन्थानं ज्ञातुमिच्छतीत्यर्थः । अत्र माणवके करणत्वमुपेक्ष्य कर्मत्वविवक्षायां द्वितीया । पथिविषयकं माणवकसम्बन्धिज्ञानमिच्छतीत्यर्थ इति प्राञ्चः । **वृक्षमपचिनोति फलानीति** ॥ वृक्षात् प्रच्याव्य फलान्यादत्त इत्यर्थः । प्रच्याव्यादानानुकूलव्यापारो लोष्टप्रहारादिरूपः अपपूर्वकचिञ्धातोरर्थः । तत्र प्रच्याव्यादानविषयत्वात् फलानि प्रधानकर्म । प्रच्यवनावधित्वाद्वृक्षः अपादानम् । तस्यापादानत्वमुपेक्ष्य कर्मत्वविवक्षायां द्वितीया । वृक्षस्य फलप्रच्यवाश्रयत्वेन कर्मत्वात् प्रच्यवस्य विभागस्य द्विनिष्ठत्वात् वृक्षसम्बन्धि यत् प्रच्युतफलादानं तत् करोतीत्यर्थः इति प्राचीनाः । **माणवकं धर्मं ब्रूते शास्ति वेति** ॥ बोधनानुकूलव्यापारः चोदनालक्षणोऽर्थो धर्मः इत्यादिशब्दप्रयोगात्मको ब्रूञोऽर्थः । माणवकाय धर्मं बोधयतीत्यर्थः । व्यापारप्रयोज्यबोधविषयत्वाद्धर्मः प्रधानकर्म । बोधविषयेण कर्मणाऽभिप्रेयमाणत्वान्माणवकस्सम्प्रदानम् । तस्य सम्प्रदानत्वमुपेक्ष्य बोधधर्मद्वारा बोधाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया । धर्मविषयकं माणवकसंबन्धिनं बोधञ्जनयतीत्यर्थ इति तु प्राञ्चः । शासेस्तु धर्मं कुर्वित्यादिविधिघटितशब्दप्रयोगरूपो बोधनानुकूलः अर्थः । इतरत् प्राग्वत् । **शतञ्जयति देवदत्तमिति** ॥ जि अभिभवे । ग्रहणानुकूलताडनादिव्यापारो जयतेरर्थः । गर्गान् शतं दण्डयतीतिवद्व्याख्येयम् । **सुधां क्षीरनिधिं मथ्नातीति** ॥ मन्थ विलोडने । द्रवद्रव्यगतसारोद्भावनानुकूलः मन्थानदण्डभ्रमजनितसंक्षोभात्मकास्फालनपर्यायो व्यापारो मन्थेरर्थः । क्षीरोदधेस्सकाशात् सुधाम्मन्थानदण्डभ्रमणेनोद्भावयतीत्यर्थः । व्यापारप्रयोज्योद्भवाश्रयत्वात् सुधा प्रधानकर्म । क्षीरोदधिस्तु उद्भवं प्रत्यपादानम् । तस्यापादानत्वमुपेक्ष्य सुधाद्वारा उद्भवाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया । सुधाश्रयं क्षीरोदधिसम्बन्धिनम् उद्भवं करोतीत्यर्थ इति तु प्राचीनाः । **देवदत्तं शतं मुष्णातीति** ॥ अपश्यति देवदत्ते तदीयं सुवर्णशतं तस्मादपनीयादत्ते इत्यर्थः । परस्वामिकद्रव्यस्य स्वामिनस्सकाशादपनीयादानानुकूलः स्वाम्यज्ञातो निशासञ्चारभित्तिच्छिद्रकरणादिरूपव्यापारो मुषेरर्थः । व्यापारप्रयोज्यापनयनपूर्वकादानाश्रयत्वाच्छतं प्रधानकर्म । अपनयनावधित्वाद्देवदत्तोऽपादानम् । अपादानत्वमनादृत्यापनीयादेयद्रव्यस्वामितया देवदत्तस्यापनीयादानाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया । शतकर्मकं देवदत्तसम्बन्धि अपनीयादानं करोतीत्यर्थ इति तु प्राञ्चः । **ग्राममजां नयतीति** ॥ ग्रामे अजां प्रापयतीत्यर्थः । णीञ् प्रापणे । देशान्तरसंयोगानुकूलश्चलनगमनपर्यायो व्यापारः प्राप्तिः । नतु देशान्तरसंयोगमात्रम् । ग्रामं प्रति चलनदशायामेव प्राप्नोति गच्छतीति प्रयोगदर्शनात् चलनेन संयोगे जाते तदनुवृत्तिदशायान्तद्दर्शनात् । अजा ग्रामं गता प्राप्तेत्येव दर्शनात् तादृशप्राप्त्यनुकूलो दण्डोद्यमनमार्गान्तरगतिप्रतिबन्धपूर्वकयोग्यमार्गसंयोजनादिरूपव्यापारो नीधातोरर्थः ।

वहति वा। अर्थनिबन्धनेयं संज्ञा। बलिं भिक्षते वसुधाम्। माणवकं धर्मं भाषते—अभिधत्ते—वक्तीत्यादि। 'कारकम्' किम्। माणवकस्य पितरं पन्थानं पृच्छति। 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्' (वा ११०३–११०४)। कुरून् स्वपिति। मासमास्ते। गोदोहमास्ते। क्रोशमास्ते।

---

एतादृशव्यापारप्रयोज्यग्रामसंयोगतदनुकूलगमनोभयाश्रयत्वात् अजा प्रधानकर्म। तादृशाजाधारत्वात् ग्रामोऽधिकरणम्। अधिकरणत्वमनादृत्य ग्रामस्यापि तथाविधसंयोगाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया। अजाकर्मकं ग्रामसम्बन्धि नयनमित्यर्थः इति तु प्राचीनाः। एवमेव ग्रामं अजां हरति कर्षति वहतीत्यपि व्याख्येयम्। तत्र देशान्तरसंयोगानुकूलम् अजाचलनं, वाहकद्वारकं तादृशचलनानुकूलव्यापारस्कन्धग्रहणादिरूपो हरतेरर्थः। रज्जुबन्धनादिना बलाच्चालनं कृषेरर्थः। शकटाद्यारोपणादिरूपदेशान्तरसंयोगानुकूलप्राप्त्यनुकूलो वहेरर्थ इति विशेषः। **अर्थनिबन्धनेयं संज्ञेति** ॥ कैयटादिभिस्तथा व्याख्यातत्वादिति भावः। तथाच एतदर्थकधात्वन्तरसंयोगेऽपि द्विकर्मकत्वं लभ्यते। वस्तुतस्तु भाष्ये याचिरुधीत्याद्युदाहृतश्लोकद्वयपरिगणिताः दुहियाचिरुधिप्रच्छिभिक्षिचिञ्ब्रूञ्शासयः इत्यष्टावेव धातवो द्विकर्मकाः। न तु पचिदण्डिजिप्रभृतयस्तद्बहिर्भूता अपि। अर्थनिबन्धनेयं संज्ञेत्यपि न युक्तम्। भाष्ये अदर्शनात्। भाष्ये याचिग्रहणेनैव सिद्धे भिक्षिग्रहणवैयर्थ्याच्च। नन्वेवं सति अहमपीदमचोद्यं चाद्ये इति 'तद्राजस्य बहुषु' इतिसूत्रस्थभाष्यविरोधः। तत्र हि चुदधातुः चौरादिकः प्रच्छिपर्यायः, कर्मणि लट्, उत्तमपुरुषैकवचनम्, अपृष्टव्यमहं पृच्छ्ये इत्यर्थः। अत्र चुदेर्द्विकर्मकत्वदर्शनात् अर्थनिबन्धनेयं संज्ञेति विज्ञायत इति चेन्न। चुदश्शङ्कार्थकत्वे सति तावता चुदधातोरपि द्विकर्मकत्वलाभेऽपि तदन्येषां द्विकर्मकत्वे मानाभावात्। अत एव 'कर्तुरीप्सिततमम्' इति सूत्रभाष्ये 'द्व्यर्थः पचिस्तण्डुलानोदनं पचतीति तण्डुलान्विक्लेदयन्नोदनं निर्वर्तयतीति गम्यते। तण्डुलानामोदनं पचतीति तण्डुलविकारमोदनं निर्वर्तयतीति गम्यते। ओदनं पचतीति ओदनार्थान् तण्डुलान् विक्लेदयतीति गम्यते इत्युदाहृतम्। कर्तुरीप्सिततममित्येव तण्डुलानामपि कर्मत्वमिति पचेरेतदुदाहरणत्वमनुपपन्नमेव। तस्माद्भाष्यपरिगणितबहिर्भूतधातूनामन्तर्भावितण्यर्थकत्व एव द्विकर्मकत्वमिति शब्देन्दुशेखरे स्थितम्। ननु कुरुषु स्वपिति देवदत्तः, मासमास्ते, इत्यादौ कुर्वादेरनुद्देश्यत्वात् 'कर्तुरीप्सिततमम्' इति कर्मत्वं न सम्भवति। कर्तुरेव स्वापादिक्रियाश्रयत्वात्। 'तथायुक्तम्' इत्यपि न कर्मत्वमित्यत आह। **अकर्मकधातुभिरिति** ॥ ग्रामसमूहात्मकः कुरुपञ्चालावन्त्यादिपरोऽत्र देशशब्दः, नतु ग्रामादिरपि। तेन ग्रामे स्वपितीत्यत्र न द्वितीया। अत्र च 'अधिशीङ्स्थासां कर्म' इति लिङ्गम्। अन्यथा अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः इत्यत्राप्यनेनैव कर्मत्वसिद्धेस्तद्वैयर्थ्यं स्पष्टमेवेत्यभिप्रेत्योदाहरति। **कुरून् स्वपितीति** ॥ देवदत्त इति शेषः। कुरुषु निद्रां करोतीत्यर्थः। देवदत्तात्तु न द्वितीया। तिङा अभिहितत्वादिति भावः। कुर्वादिशब्दाः

## ५४० । गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ । (१-४-५२)

गत्याद्यर्थानां शब्दकर्मणामकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात् ।

शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत् ।
आशयच्चामृतं देवान्वेदमध्यापयद्विधिम् ॥

---

जनपदविशेषेषु स्वभावान्नित्यबहुवचनान्ताः । **मासमास्ते इति** ॥ मासस्याधिकरणसंज्ञां बाधित्वा कर्मत्वम् । **गोदोहमिति** ॥ दोहनन्दोहः । भावे घञ् । भावो धात्वर्थः । गोदोहनकालोऽत्र विवक्षितः । नचेह कालत्वादेव सिद्धिरिशङ्क्या । अहोरात्रसमूहस्य मासादेरेव तत्र ग्रहणात् । गन्तव्यत्वेनाध्वनो विशेषितत्वात् नियतपरिमाणः क्रोशादिरेव गृह्यत इत्यभिप्रेत्योदाहरति । **क्रोशमास्ते इति** ॥ गन्तव्यत्वविशेषणादध्वन्यास्ते इत्यत्र न भवति । अनत्यन्तसंयोगार्थमिदं वार्तिकम् । अत्यन्तसंयोगे तु 'कालाध्वनोरत्यन्तसंयोगे' इत्येव सिद्धमिति प्राचीनानुसारी पन्थाः । वस्तुतस्तु 'अकर्मकधातुभिर्योगे' इत्यादिवचनं भाष्ये न दृश्यते । किन्तु अकर्मकधातूनां कथं द्विकर्मकत्वमित्याशङ्कायां 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् । देशश्च' इत्युक्तम् । हिशब्दघटितत्वादिदं न विधायकम्, किन्तु अनुवादकमेव । तथाहि 'कुरून् स्वपिति' इत्यादौ स्वापादिक्रियया कुर्वादीन् व्याप्नोतीत्यर्थः । धातूनामनेकार्थतया कदाचित् तेषां स्वापादिकरणकव्यापनेऽपि वृत्तेः । ततश्च 'कर्तुरीप्सिततमम्' इत्येव सिद्धम् । यदा तु स्वपादिधातूनां स्वापादावेव वृत्तिः, नतु व्याप्तिपर्यन्ते, तदा कुरुषु स्वपिति, मासे आस्ते इत्यधिकरणत्वमेव । एतच्च 'अकथितञ्च' इत्यत्र 'कालाध्वनोरत्यन्तसंयोगे' इत्यत्र च भाष्ये स्पष्टम् । अत एव 'समां समां विजायते' इति सूत्रे समायां समायां विजायते इति विग्रहकथनं भाष्ये सङ्गच्छते । अन्यथा द्वितीयाप्रसङ्गात् । अत एव च लकारार्थप्रक्रियायाम् 'अत्यन्तापह्नवे लिड्वक्तव्यः' इत्यत्र 'कलिङ्गेष्ववात्सीः' 'नाहं कलिङ्गान् जगाम' इति मूलकृदुदाहृते वाक्ये कलिङ्गेष्विति सप्तमी सङ्गच्छते । उक्तञ्च हरिणा 'कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः । सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते' इति शब्देन्दुशेखरे प्रपञ्चितम् । **गतिबुद्धि** ॥ गतिश्च बुद्धिश्च प्रत्यवसानञ्च तानीति द्वन्द्वः । प्रत्यवसानं भक्षणम् । गतिबुद्धिप्रत्यवसानानि अर्थो येषामिति विग्रहः । शब्दः कर्म येषान्ते शब्दकर्माणः, तेषामिति बहुव्रीहिः । अविद्यमानं कर्म येषान्ते अकर्मकाः । उभयत्रापि कर्मशब्दः कारकपरः । गतिबुद्धिप्रत्यवसानार्थाश्च शब्दकर्माणश्च अकर्मकाश्च तेषामिति द्वन्द्वः । अणौ कर्ता अणिकर्ता यच्छब्दोऽध्याहार्यः । तदाह । **गत्याद्यर्थानामित्यादिना** ॥ णौ अनुत्पन्ने सति शुद्धधातुवाच्यां क्रियां प्रति यः कर्ता सः ण्यन्तधातुवाच्यां प्रयोजकव्यापारात्मिकां क्रियां प्रति कर्मसंज्ञकस्स्यादित्यर्थः । क्रमेणोदाहरति । **शत्रूनिति** ॥ 'शत्रूनगमयत् स्वर्गम्' इति गत्यर्थकस्योदाहरणम् । शत्रवः युद्धे मृताः स्वर्गमगच्छन्, तान् यश्शस्त्रघातेनागमयत् स्वर्गं, स श्रीहरिर्मे गतिरित्यत्रान्वयः । अत्र गमेरण्य-

आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः।

'गति—' इत्यादि किम्। पाचयत्योदनं देवदत्तेन। 'अण्यन्तानाम्' किम्। गमयति देवदत्तो यज्ञदत्तं, तमपरः प्रयुङ्क्ते, गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः। 'नीवह्योर्न' (वा ११०९)। नाययति, वाहयति वा भारं भृत्येन। 'नियन्तृकर्तृकस्य वहेरनिषेधः' (वा १११०)। वाहयति रथं वाहान्सूतः।

न्तावस्थायां शत्रवो गमनक्रियां प्रति कर्तारः। स्वर्गस्तु कर्म। ण्यन्तावस्थायान्तु णिज्वाच्यां प्रयोजकव्यापारात्मिकां शस्त्रघातक्रियां प्रति घातयिता हरिः कर्ता, शत्रवस्तु कर्म। शस्त्रघातजन्या या क्रिया स्वर्गप्राप्तिस्तदाश्रयत्वात्। एवञ्च हरिः प्रयोजककर्ता, शत्रवस्तु प्रयोज्यकर्तारः, प्रयोजककर्तुर्हरेः शाब्दं प्राधान्यम्, अन्यानधीनत्वलक्षणञ्चार्थप्राधान्यमस्ति। शत्रूणान्तु अन्याधीनस्वर्गप्राप्तिकर्तृत्वं प्रयोजकाधीनत्वात् गुणभूतमेव। शेषित्वलक्षणमार्थप्राधान्यन्तु प्रयोज्यशत्रुगतकर्तृत्वस्यैव। प्रयोजकव्यापारस्य प्रयोज्यस्वर्गप्राप्त्यर्थत्वादिति स्थितिः। तत्रान्यानधीनत्वलक्षणस्यार्थप्राधान्यस्य शाब्दप्राधान्यस्य च प्रयोजकव्यापारे सत्त्वात्। तदनुरोधि शत्रुगतं कर्मत्वं 'कर्तुरीप्सिततमम्' इत्येव सिद्धम्। अतो नियमार्थमिदं सूत्रम्। णिजर्थेनाप्यमानस्य प्रयोज्यकर्तुर्यदि कर्मत्वं भवति तर्हि गत्यर्थादीनामेवेति। तेन पाचयति देवदत्तेन इत्यादौ प्रयोज्यकर्तुर्न कर्मत्वम्, किन्तु कर्तृत्वमेव। तदेतत् 'हेतुमति च' इति सूत्रे भाष्यकैयटयोः स्पष्टम्। उक्तञ्च हरिणा। "गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः। नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते॥" इति। स्वधर्मेणेति तृतीययेत्यर्थः। एवञ्च स्वर्गकर्मकं शत्रुनिष्ठं यद्गमनं तदनुकूलो यन्निष्ठो व्यापारः स श्रीहरिर्मे गतिरिति वाक्यार्थः। एवमग्रेऽप्यूह्यम्। **वेदार्थं स्वानवेदयदिति**॥ बुध्यर्थधातोरुदाहरणम्। स्वशब्दः आत्मीयपरः, स्वे स्वकीयाः विधिप्रमुखाः वेदार्थमविदुः, तान् हरिः वेदार्थमवेदयदित्यर्थः। अत्र स्वेषां प्रयोज्यकर्तॄणां कर्मत्वम्। **आशयच्चामृतन्देवानिति**॥ प्रत्यवसानार्थस्य उदाहरणम्। देवा अमृतमाश्नन्, तान् हरिराशयदित्यर्थः। **वेदमध्यापयद्विधिमिति**॥ शब्दकर्मणः उदाहरणमेतत्। विधिः ब्रह्मा वेदमधीतवान्, तं हरिः अध्यापयदित्यर्थः। अत्र प्रयोज्यकर्तुर्विधेः कर्मत्वम्। **आसयत्सलिले पृथ्वीमिति**॥ अकर्मकस्योदाहरणम्। सलिले पृथ्वी आस्त, तां हरिरासयदित्यर्थः। अत्र पृथिव्याः प्रयोज्यकर्त्र्याः कर्मत्वम्। यः स मे श्रीहरिर्गतिरिति प्रतिवाक्यमन्वयः। **नीवह्योर्नेति**॥ णीञ् प्रापणे, वह प्रापणे, इत्यनयोः, ण्यन्तयोः प्रयोज्यकर्तुः 'गतिबुद्धि' इत्युक्तं नेति वक्तव्यमित्यर्थः। **नाययति वाहयति वेति**॥ भृत्यो भारं नयति वहति वा, तं प्रेरयतीत्यर्थः। अत्र प्रयोज्यकर्तुर्भृत्यस्य णिच्प्रकृत्यर्थनयनं वहनञ्च प्रति कर्तुः प्रयोजकव्यापारं प्रति कर्मत्वे निवृत्ते णिच्प्रकृत्यर्थं प्रति कर्तृत्वस्यैव निरपवादत्वेनावस्थानात् तृतीया बोध्या। यद्यपि नीवह्योः प्रापणमर्थः, तथापि गत्यनुकूलव्यापारार्थके प्रापणे गतेर्विशेषणत्वेन प्रविष्टतया गत्यर्थत्वात् प्राप्तिरिति भावः। **नियन्तृकर्तृकस्य वहेरनिषेधः इति**॥ एवञ्च तत्र प्रयोज्यकर्तुरुक्तस्य 'नीवह्योर्न' इति प्रतिषेधस्याभावे सति प्रयोज्यस्य कर्मत्वं वक्तव्यमिति फलितम्। **वाहयतीति**॥ वाहाः अश्वाः वहन्ति,

'आदिखाद्योर्न' (वा ११०९)। आदयति, खादयति वा अन्नं वटुना। 'भक्षेरहिंसार्थस्य न' (वा ११११) भक्षयत्यन्नं वटुना। 'अहिंसार्थस्य' किम्। भक्षयति बलीवर्दान्सस्यम्। 'जल्पतिप्रभृतीनामुपसङ्ख्यानम्' (वा ११०७)। जल्पयति भाषयति वा धर्मं पुत्रं देवदत्तः। 'दृशेश्च' (वा ११०८)। दर्शयति हरिं भक्तान्। सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणं, न तु तद्विशेषार्थानामित्यनेन ज्ञाप्यते। तेन 'स्मरति' 'जिघ्रति' इत्यादीनां न।

---

तान् सूतः प्रेरयतीत्यर्थः। "नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः" इत्यमरः। "वहन्ति बलीवर्दाः यवान्, वाहयति बलीवर्दान् देवदत्तः" इति भाष्योदाहरणात्। नियन्ता पशुप्रेरक एव विवक्षितः। **आदिखाद्योर्नेति** ॥ अद भक्षणे, खाद भक्षणे, अनयोः प्रयोज्यकर्तुः कर्मत्वं नेति वक्तव्यमित्यर्थः। प्रत्यवसानार्थकत्वात् प्राप्तिः। **आदयति खादयति वेति** ॥ अत्ति खादति वा अन्नं वटुः, तं प्रेरयतीत्यर्थः। **भक्षेरिति** ॥ अहिंसार्थकस्य भक्षधातोः प्रयोज्यकर्तुः कर्मत्वन्नेति वक्तव्यमित्यर्थः। ननु 'गतिबुद्धि' इति सूत्रे अणौ कर्तुः णौ कर्मत्वमुक्तम्। भक्षधातुस्तु चुरादित्वात् नित्यं स्वार्थिकण्यन्तः। तस्याणिकर्ता नास्त्येव। अतस्तस्य कर्मत्वनिषेधोऽनुपपन्नः, अप्रसक्तत्वादिति चेन्न। अत एव निषेधाल्लिङ्गात् 'गतिबुद्धि' इति सूत्रे णिग्रहणेन हेतुमत एव विवक्षितत्वात्। एवञ्च हेतुमण्णिचि अनुत्पन्ने सति अण्यन्तभिक्षिधातुवाच्यां क्रियां प्रति कर्तुः हेतुमण्ण्यन्तवाच्यां क्रियां प्रति कर्मत्वमित्यर्थः पर्यवस्यतीति न दोषः। **भक्षयत्यन्नं वटुनेति** ॥ चुरादिण्यन्तात् भक्षधातोर्हेतुमण्णिचि पूर्वणेर्लोपे हेतुमण्ण्यन्तात्तिबादौ सति भक्षयतीति रूपम्। एवञ्च भक्षयत्यन्नं वटुः, खादतीत्यर्थः। तं प्रेरयतीति ण्यन्तस्यार्थः। **भक्षयति बलीवर्दान् सस्यमिति** ॥ क्षेत्रे प्ररूढमलूनं सस्यमिह विवक्षितम्। तस्य तदानीमन्तःप्रज्ञजीवत्वात् तद्भक्षणं हिंसैवेति भावः। **जल्पतिप्रभृतीनामिति** ॥ एतेषामणौ यः कर्ता सः णौ कर्म स्यादिति वक्तव्यमित्यर्थः। **जल्पयति भाषयति वेति** ॥ धर्ममिति शेषः। पुत्रो धर्मं जल्पति भाषते वा, तं देवदत्तः प्रेरयतीत्यर्थः। गत्यर्थादिष्वनन्तर्भावाद्वचनम्। नच शब्दनक्रियार्थत्वादेव सिद्धे वचनमिदं व्यर्थमिति वाच्यम्। अत एव शब्दकर्माकर्मकाणामित्यस्य शब्दः कर्म कारकं येषामित्यर्थात्। अन्यथा वेदमध्यापयद्विधिमित्यसिद्धेः। वार्तिके आदिना व्याहरतिवदत्यादीनां सङ्ग्रहः। भाष्ये तु 'के पुनर्जल्पतिप्रभृतयः, जल्पति विलपति आभाषते' इत्येवोक्तम्। परिगणनमित्येके, उदाहरणमात्रप्रदर्शनमित्यन्ये। **दृशेश्चेति** ॥ 'दृशिर् प्रेक्षणे' अस्याप्यणौ यः कर्ता सः णौ कर्म स्यादिति वक्तव्यमित्यर्थः। **दर्शयतीति** ॥ हरिं भक्ताः पश्यन्ति, तान् गुरुः प्रेरयतीत्यर्थः। ननु दृशेर्बुद्धिविशेषात्मकत्वादेव सिद्धे किमर्थमिदं वचनमित्यत आह। **सूत्रे इति** ॥ 'गतिबुद्धि' इति सूत्रे बुद्धिग्रहणेन ज्ञानसामान्यवाचिनां 'विद ज्ञाने, ज्ञा अवबोधने' इत्यादीनामेव ग्रहणम्, नतु ज्ञानविशेषवाचिनामित्येतत् 'दृशेश्च' इत्यनेन विज्ञायते। अन्यथा 'दृशेश्च' इत्यस्य वैयर्थ्यप्रसङ्गात्। **तेनेति** ॥ ज्ञापनेनेत्यर्थः। **स्मरतिजिघ्रतीत्यादीनामिति** ॥

स्मारयति घ्रापयति देवदत्तेन। 'शब्दायतेर्न' (वा ११०५)। शब्दाययति देवदत्तेन। धात्वर्थसङ्गृहीतकर्मत्वेनाकर्मकत्वात्प्राप्तिः। येषां देशकालादिभिन्नं कर्म न सम्भवति तेऽत्राकर्मकाः। न त्वविवक्षितकर्माणोऽपि। तेन 'मासमासयति देवदत्तम्' इत्यादौ कर्मत्वं भवति। 'देवदत्तेन पाचयति' इत्यादौ तु न।

## ५४१। हृक्रोरन्यतरस्याम्। (१-४-५३)

हृक्रोरणौ यः कर्ता स णौ वा कर्मसंज्ञः स्यात्। हारयति कारयति वा भृत्यं–भृत्येन वा कटम्। 'अभिवादिदृशोरात्मनेपदे वेति वाच्यम्' (वा १११४)। अभिवादयते दर्शयते देवं भक्तं--भक्तेन वा।

---

आदिना प्रेक्षत्यादीनां सङ्ग्रहः। **स्मारयतीति** ॥ स्मरति प्रियां देवदत्तः, जिघ्रति चन्दनं देवदत्तः, तं यज्ञदत्तः प्रेरयतीत्यर्थः। **शब्दायतेर्नेति** ॥ शब्दं करोतीत्यर्थे 'शब्दवैर' इत्यादिना क्यङि, 'अकृत्सार्वधातुकयोः' इति दीर्घे, 'सनाद्यन्ताः' इति धातुत्वे श्तिपा निर्देशोऽयम्। शब्दायेति क्यङन्तधातोः अणौ कर्ता णौ कर्म नेति वक्तव्यमित्यर्थः। **शब्दाययति देवदत्तेनेति** ॥ शब्दायते देवदत्तः, तं यज्ञदत्तः प्रेरयतीत्यर्थः। देवदत्तस्य कर्मत्वाभावात् प्रयोज्यकर्तृत्वमादाय तृतीयैव। अत्र शब्दकर्मकत्वात् प्राप्तिरिति भ्रमं निरस्यति। **धात्वर्थेति** ॥ शब्दकर्मकमुत्पादनं शब्दायेति क्यङन्तस्य धातोरर्थः। एवञ्च शब्दात्मकं कर्म धात्वर्थे अन्तर्भूतम्। अतश्शब्दायेति क्यङन्तधातुरकर्मकः। 'धात्वर्थबहिर्भूतकर्मकत्वमेव सकर्मकत्वम्' इति 'सुप आत्मनः' इति सूत्रे भाष्ये प्रपञ्चितत्वात्। तस्मादकर्मकत्वादेवात्र प्राप्तिरित्यर्थः। एवञ्च 'शब्दाययति सैनिकै रिपून्' इति कर्म प्रयुञ्जानाः परास्ताः। ननु मासमास्ते देवदत्तः, तं प्रेरयति मासमासयति देवदत्तं यज्ञदत्त इत्यत्र देवदत्तस्य प्रयोज्यकर्तुः कर्मत्वन्न स्यात्। आसधातोर्गत्यादिष्वनन्तर्भावात्। नचाकर्मकत्वात्तदन्तर्भाव इति वाच्यम्। 'अकर्मकधातुभिर्योगे' इति मासस्य कर्मतया आसेरकर्मकत्वासम्भवात्। किञ्च ओदनादिकर्मणः अविवक्षायां देवदत्तः पचति, पाचयति देवदत्तेन यज्ञदत्तः, इत्यत्र प्रयोज्यकर्तुर्देवदत्तस्य कर्मत्वन्न स्यात्। तदानीं पचेरकर्मकत्वेन गत्यादिष्वन्तर्भावादित्यत आह। **येषामिति** ॥ इदञ्च प्रकृतसूत्रे भाष्यकैयटयोः स्पष्टम्। **हृक्रो** ॥ हा च का च हृकरौ तयोरिति विग्रहः। **हारयति कारयति वेति** ॥ हरति करोति वा कटं भृत्यः, तं प्रेरयतीत्यर्थः। अत्र प्रयोज्यकर्तुर्भृत्यस्य कर्मत्वविकल्पः। हृक्रोर्गत्यर्थादिष्वनन्तर्भावादप्राप्ते विभाषेयम्। हृक्रोरर्थान्तरे तु प्राप्तविभाषा। अभ्यवहारयति सैन्धवान् सैन्धवैर्वा, विकारयति सैन्धवान् सैन्धवैर्वा। अत्र अभ्यवहरतेर्भक्षणार्थत्वात् विकारयतेरकर्मकत्वाच्च प्राप्तिः। **अभिवादीति** ॥ हेतुमण्ण्यन्तस्याभिपूर्वकवदधातोर्दृशिप्रकृतिकण्यन्तस्य चात्मनेपदिनोऽणौ कर्ता णौ कर्म वेत्यर्थः। **अभिवादयते इति** ॥ अभिवदति नमस्करोति देवं भक्तः, तं गुरुः प्रेरयतीत्यर्थः। कर्तृगामिनि फले 'णिचश्च' इत्यात्मनेपदम्। अत्र भक्तस्य प्रयोज्यकर्तुः कर्मत्वविकल्पः। अप्राप्तविभाषेयम्। परस्मैपदे तु अभिवादयति देवं भक्तेनेत्येव। पश्यति देवं भक्तः, तं गुरुः प्रेरयति। दर्शयते देवं भक्तं भक्तेन वा।

## ५४२ । अधिशीङ्स्थासां कर्म । (१-४-४६)

अधिपूर्वाणामेषामाधारः कर्म स्यात् । अधिशेते--अधितिष्ठति--अध्यास्ते वा वैकुण्ठं हरिः ।

## ५४३ । अभिनिविशश्च । (१-४-४७)

अभिनीत्येतत्सङ्घातपूर्वस्य विशतेराधारः कर्म स्यात् । अभिनिविशते सन्मार्गम् । 'परिक्रयणे सम्प्रदानम्—' (सू ५८०) इति सूत्रादिह मण्डूकप्लुत्या अन्यतरस्यांग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणात्क्वचिन्न । पापेऽभिनिवेशः ।

## ५४४ । उपान्वध्याङ्वसः । (१-४-४८)

उपादिपूर्वस्य वसतेराधारः कर्म स्यात् । उपवसति—अनुवसति--अधिवसति—आवसति वा वैकुण्ठं हरिः । 'अभुक्त्यर्थस्य न' (वा १०८७) । वने उपवसति ।

'गतिबुद्धि' इत्यत्र बुद्धिग्रहणेन ज्ञानसामान्यवाचिन एव ग्रहणमित्युक्तम् । तथापि 'दृशेश्च' इति नित्यं प्राप्ते विकल्पः । **अधिशीङ्स्थासां कर्म** ॥ शीङ्, स्था, आस्, एषां द्वन्द्वः । अधिपूर्वाश्शीङ्स्थासः इति विग्रहे शाकपार्थिवादित्वात् उत्तरपदलोपः । तदाह । **अधिपूर्वाणामिति** ॥ अधिकरणसंज्ञापवादोऽयम् । **अधिशेते इति** ॥ अधिशेते वैकुण्ठं हरिः, अधितिष्ठति वैकुण्ठं हरिः, अध्यास्ते वैकुण्ठं हरिरित्यन्वयः । अधिस्तु सप्तम्यर्थस्याधारस्य द्योतकः । वैकुण्ठे शेते तिष्ठत्यास्ते वेत्यर्थः । **अभिनिविशश्च** ॥ आधारे इति कर्मेति चानुवर्तते । अभिनीति सङ्घातग्रहणम् । तदाह । **अभिनीत्येतत्सङ्घातपूर्वस्येति** ॥ **अभिनिविशते सन्मार्गमिति** ॥ आग्रहवानित्यर्थः । अप्रतिहतप्रवृत्तिमानिति यावत् । नन्वेवं सति पापेऽभिनिवेशः इत्यत्रापि कर्मत्वात् द्वितीया स्यादित्यत आह । **परिक्रयणे इति** ॥ 'परिक्रयणे' इति सूत्रादन्यतरस्याङ्ग्रहणमनुवर्त्य विभाषाश्रयणात् क्वचिन्नेत्यन्वयः । तर्हि अभिनिविशते सन्मार्गमित्यत्रापि विकल्पस्स्यादित्यत आह । **व्यवस्थितेति** ॥ ननु 'परिक्रयणे सम्प्रदानमन्यतरस्याम्, आधारोऽधिकरणम्, अधिशीङ्स्थासां कर्म, अभिनिविशश्च' इति सूत्रक्रमः । तत्र 'अभिनिविशश्च' इत्यत्र कथमन्यतरस्याङ्ग्रहणानुवृत्तिः । 'आधारोऽधिकरणम्' 'अधिशीङ्स्थासां कर्म' इत्यत्र च तदनुवृत्तेरभावादित्यत आह । **मण्डूकप्लुत्येति** ॥ तुल्यमिति शेषः । मण्डूकाः यथा मध्ये पदानि सन्ततमप्रक्षिपन्त एव उत्प्लुत्य गच्छन्ति तद्वदनुवर्त्यैत्यर्थः । 'एष्वर्थेष्वभिनिविष्टानाम्' इति समर्थसूत्रे भाष्यप्रयोगोऽत्र मानम् । **उपान्वध्याङ्वसः** ॥ उप अनु अधि आङ् इत्येतेषां द्वन्द्वः । उपान्वध्याङ्पूर्वो वस् इति विग्रहे शाकपार्थिवादित्वात् समासस्तदाह । **उपादिपूर्वस्येति** ॥ **उपवसतीत्यादि** ॥ वैकुण्ठे वसतीत्यर्थः । उपसर्गाः

"उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥" (वा १४४४)

**उभयतः कृष्णं गोपाः। सर्वतः कृष्णम्। धिक् कृष्णाभक्तम्। उपर्युपरि लोकं हरिः। अध्यधि लोकम्। अधोऽधो लोकम्। अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि' (वा १४४२—१४४३)। अभितः कृष्णम्। परितः कृष्णम्। ग्रामं समया। निकषा लङ्काम्। हा कृष्णाभक्तम्। तस्य शोच्यता इत्यर्थः। 'बुभुक्षितं न प्रतिभाति किञ्चित्'।**

आधारत्वद्योतकाः। अत्र 'वसेरश्यर्थस्य प्रतिषेधः' इति वार्तिकम्। तत्रार्थशब्दो निवृत्तिवचनः। "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः। भोजनस्यार्थः निवृत्तिर्यस्मात् प्रतीयते सः अश्यर्थः, भोजननिवृत्तिवाचकस्य अशेराधारस्य कर्मत्वप्रतिषेध इति यावत्। तदेतदर्थतस्सङ्गृह्णाति। **अभुक्त्यर्थस्य नेति**॥ अथोपपदविभक्तयः। **उभसर्वतसोः इति**॥ वार्तिकम्। उभशब्दसर्वशब्दप्रकृतिकतसन्तयोः प्रयोगे सति द्वितीया कार्येत्यर्थः। **धिगिति**॥ धिक्शब्दस्य प्रयोगे सति द्वितीया कार्या। 'प्रकृतिवदनुकरणम्' इत्यव्ययत्वात्सुपो लुक्। उपर्यादिष्वित्यनेन 'उपर्यध्यधसस्सामीप्ये' इति सूत्रोपात्तान्यव्ययानि गृह्यन्ते। द्विरुक्तस्य परमाम्रेडितम्। तदन्तेषु द्विर्वचनेष्विति यावत्। तथाच कृतद्विर्वचनेषु उपर्यादिषु त्रिषु प्रयुज्यमानेषु द्वितीयेत्यर्थः। **ततः इति**॥ उक्तप्रदेशेभ्योऽन्यत्रापि द्वितीया दृश्यते इत्यर्थः। **उभयतः कृष्णं गोपाः इति**॥ कृष्णस्य पार्श्वद्वयेऽपीत्यर्थः। आद्यादित्वात् तसिः। 'उभयोऽन्यत्र' इत्ययच्। षष्ठ्यर्थे द्वितीया। **सर्वतः कृष्णमिति**॥ कृष्णस्य सर्वेषु पार्श्वेषु गोपा इत्यर्थः। **धिक् कृष्णाभक्तमिति**॥ धिक् निन्दायाम्। कृष्णाभक्तस्य निन्देत्यर्थः। केचित्तु कृष्णाभक्तो निन्द्य इत्यर्थः, प्रथमार्थे द्वितीयेत्याहुः। धिङ्मूर्खेत्यत्र तु निषिद्धाचरणमित्यध्याहार्यम्। **उपर्युपरीति**॥ 'उपर्यध्यधसस्सामीप्ये' इति द्विर्वचनम्। लोकस्य समीपे उपरि हरिरस्तीत्यर्थः। **अध्यधीति**॥ लोकस्य समीपदेशे हरिरस्तीत्यर्थः। **अधोऽधः इति**॥ लोकस्य समीपे अधो हरिरस्तीत्यर्थः। **अभितःपरितः इति**॥ 'ततोऽन्यत्रापि दृश्यते' इत्यस्य प्रपञ्चोऽयम्। योगेऽपीत्यनन्तरं द्वितीयेति शेषः। **अभितः कृष्णमिति**॥ गोपा इति शेषः। कृष्णस्य पार्श्वद्वयेऽपीत्यर्थः। **परितः कृष्णमिति**॥ कृष्णस्य सर्वेषु पार्श्वेषु गोपा इत्यर्थः। 'पर्यभिभ्याञ्च' इति तसिल्। **ग्रामं समया, निकषेति**॥ 'समया निकषा' इति च आकारान्ते अव्यये। ग्राममित्यस्य प्रत्येकमन्वयः। ग्रामस्य समीपे इत्यर्थः। "निकषान्तिके, समयान्तिकमध्ययोः" इति चामरः। "विलङ्घ्य लङ्कां निकषा हनिष्यति" इति माघः। **हा कृष्णाभक्तमिति**॥ हा इत्याकारान्तमव्ययं खेदे। "हा विषादशुगार्तिषु" इत्यमरः। तदाह। **तस्य शोच्यतेत्यर्थ इति**॥ कृष्णाभक्तश्शोच्य इत्यर्थ इत्यन्ये। प्रतियोगमुदाहरति। **बुभुक्षितमिति**॥ क्षुधार्तस्य किञ्चिदपि न स्फुरतीत्यर्थः। 'भा दीप्तौ।' इह तु उपसर्गबलात् स्फुरणे वर्तते। ततो लक्षणादावृत्तेः प्रतेर्न कर्मप्रवचनीयत्वम्। एवञ्च

## ५४५ । अन्तरान्तरेणयुक्ते । (२-३-४)

आभ्यां योगे द्वितीया स्यात् । अन्तरा त्वां मां हरिः । अन्तरेण हरिं न सुखम् ।

## ५४६ । कर्मप्रवचनीयाः । (१-४-८३)

इत्यधिकृत्य ।

## ५४७ । अनुर्लक्षणे । (१-४-८४)

लक्षणे द्योत्येऽनुरुक्तसंज्ञः स्यात् । गत्युपसर्गसंज्ञापवादः ।

## ५४८ । कर्मप्रवचनीययुक्ते द्वितीया । (२-३-८)

एतेन योगे द्वितीया स्यात् । पर्जन्यो जपमनुप्रावर्षत् । हेतुभूतजपोपलक्षितं

---

'कर्मप्रवचनीययुक्ते द्वितीया' इत्यनेन गतार्थत्वन्न भवति । **अन्तरान्तरेणयुक्ते** ॥ "अन्तरा इत्याकारान्तमव्ययं, नतु टाबन्तम् । अन्तरेणेत्यप्यव्ययमेव, नतु तृतीयान्तम्" इति भाष्ये स्थितम् । **अन्तरा त्वां मां हरिरिति** ॥ तव च मम च मध्ये हरिरित्यर्थः । 'अन्तरा मध्ये' इत्यमरः । **अन्तरेण हरिमिति** ॥ हरेर्वर्जने सुखन्नास्तीत्यर्थः । "पृथग्विनान्तरेणर्ते हिरुङ्नाना च वर्जने" इत्यमरः । किमनयोरन्तरेण गतेनेत्यत्र तु अन्तरशब्दो विशेषवाची । अनयोर्विशेषेण ज्ञातेनेत्यर्थः । अत्र अन्तरेणेत्यस्य तृतीयान्तत्वादव्ययत्वाभावान्न तद्योगे द्वितीया । नन्वेवं सति 'हलोऽनन्तरास्संयोगः' इत्यत्र 'द्वयोश्चैवान्तरा कश्चित्' इति भाष्यप्रयोगः कथमिति शङ्क्यम् । मध्यत्वनिमित्तमवधित्वं हि ययोर्निर्णीतं तत्र द्वितीया । ययोस्तु न तन्निर्णयस्तत्र सम्बन्धसामान्ये षष्ठ्येव भवति । युक्तग्रहणादिति कैयटः । **कर्मप्रवचनीयाः ॥ इत्यधिकृत्येति** ॥ 'प्राग्रीश्वरान्निपाताः' इति पर्यन्तमिति बोध्यम् । **अनुर्लक्षणे ॥ लक्षणे द्योत्ये इति** ॥ लक्ष्यलक्षणभावसम्बन्धे द्योत्ये इत्यर्थः । **उक्तसंज्ञः इति** ॥ कर्मप्रवचनीयसंज्ञ इत्यर्थः । लक्ष्यते ज्ञायतेऽनेनेति लक्षणम्, तच्च हेतुभूतं विवक्षितम्, नतु वृक्षं प्रति विद्योतते विद्युदितिवत् चिह्नमात्रम्, तथा सति 'लक्षणेत्थम्' इत्येव सिद्धेरिति वक्ष्यते । **गत्युपसर्गसंज्ञापवादः इति** ॥ अनेन क्रियायोग एव कर्मप्रवचनीयसंज्ञेति सूचितम् । 'कर्मप्रवचनीयाः' इति महासंज्ञाकरणसामर्थ्यात् अन्वर्थत्वम् । कर्मेति क्रियोच्यते, तां प्रोक्तवन्तः कर्मप्रवचनीयाः, भूते कर्तरि बाहुळकादनीयर्प्रत्ययः । ततश्च क्रियामेव न द्योतयन्ति किन्तु क्रियानिरूपितसम्बन्धविशेषं द्योतयन्ति । एवञ्च अनुप्रत्यादिषु क्रियानिरूपितसम्बन्धस्य द्योत्यत्वेन अन्वयात् तत्र गत्युपसर्गसंज्ञयोः प्राप्तिर्बोध्या । **कर्मप्रवचनीय** ॥ युक्ते इति भावे क्तः । तदाह । **एतेन योगे इति ॥ पर्जन्यो जपमन्विति** ॥ कदा पर्जन्योऽवर्षदिति प्रश्ने उत्तरमिदम् । अत्र वृष्टिकाल उपदेश्यः, सच दुर्ज्ञानत्वात् शाखाग्रं प्रति द्विकलश्चन्द्र इतिवत् प्रज्ञातं किञ्चिदवलम्ब्यैव ज्ञाप्यः । जपोऽत्र प्रज्ञातम्, तत्र जपकाले पर्जन्यः प्रावर्षदिति सम्भवति । हेतुभूतजपो ह्यत्र लक्षणम्, हेतुत्वञ्च पूर्वकालवृत्तित्वघटितम् । एवञ्च वर्षहेतुभूतवरुणजपोत्तरकाले

वर्षणमित्यर्थः । परापि "हेतौ तृतीया" अनेन बाध्यते । 'लक्षणेत्थम्भूत—' (सू ५५२) इत्यादिना सिद्धे पुनः संज्ञाविधानसामर्थ्यात् ।

## ५४९ । तृतीयार्थे । (१-४-८५)

अस्मिन्द्योत्येऽनुरुक्तसंज्ञः स्यात् । नदीमन्ववसिता सेना । नद्या सह सम्बद्धेत्यर्थः । 'षिञ् बन्धने' क्तः ।

## ५५० । हीने । (१-४-८६)

हीने द्योत्येऽनुः प्राग्वत् । अनु हरिं सुराः । हरेर्हीना इत्यर्थः ।

---

पर्जन्यः प्रावर्षदित्युत्तरं पर्यवस्यति । तत्र लक्षणत्वं हेतुत्वञ्चेति द्वयं तृतीयार्थः, तदुभयमनुना द्योत्यते । लक्षणत्वञ्च ज्ञानजनकज्ञानविषयत्वम्, जपज्ञानेन तदुत्तरकालविशिष्टा वृष्टिर्ज्ञाप्यते । ततश्च जपात्मकहेतुज्ञानजन्यज्ञानविषयो वर्षणमिति बोधः । तदाह । **हेतुभूतेति** ॥ अनभिहिताधिकारान्न पर्जन्यात् द्वितीया । तस्य तिङा अभिहितत्वात् । ननु हेतुत्वांशस्य कथमिह लाभः, 'अनुर्लक्षणे' इत्यत्र तदनुपादानात् । एवञ्च हेतुत्वाविवक्षायां वृक्षमनु विद्योतते विद्युदित्यत्र 'अनुर्लक्षणे' इति सावकाशम् । 'हेतौ' इति तृतीया तु धनेन कुलमित्यादौ सावकाशा । पर्जन्यो जपमनु प्रावर्षदित्यत्र तु तदुभयमपि प्रसक्तम् । तत्र परत्वात् हेतुतृतीयैव स्यादित्यत आह । **परापीति** ॥ 'अनुर्लक्षणे' इति कर्मप्रवचनीयत्वप्रयुक्तद्वितीयाविधिनेत्यर्थः । **पुनस्संज्ञेति** ॥ वृक्षमनु विद्योतते विद्युत् इत्यत्र हि 'अनुर्लक्षणे' इत्यस्य न प्रयोजनम् । 'लक्षणेत्थम्' इत्येव सिद्धेः । ततश्च 'अनुर्लक्षणे' इत्यारम्भसामर्थ्यात् हेतुभूते लक्षणे अनोः कर्मप्रवचनीयत्वलब्धया द्वितीयया हेतौ तृतीया बाध्यत इति विज्ञायते इत्यर्थः । ततश्च हेतुत्वमपि शाब्दबोधे विषय इति फलति । **तृतीयार्थे** ॥ अनुरित्यनुवर्तते । कर्मप्रवचनीयाः इत्यधिकृतम् । **अस्मिन् द्योत्ये इति** ॥ 'सहयुक्तेऽप्रधाने' इति तृतीया । साहित्ये द्योत्ये इत्यर्थः । अत्र 'तृतीयार्थे' इत्यनेन कर्तृकरणे न गृह्येते । रामेण शरेणानुहतो वालीत्यत्र 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति न्यायेन तृतीयाया एव प्रवृत्त्या अस्यास्संज्ञायाः फलाभावात्, नापि 'येनाङ्गविकारः' इति तृतीयार्थोऽत्र विवक्षितः, 'अनन्तरस्य' इति न्यायेन 'कर्मप्रवचनीययुक्ते द्वितीया' इत्यस्य 'सहयुक्तेऽप्रधाने' इत्यस्यैव बाधकत्वात् । तदाह । **नद्या सह सम्बद्धेति** ॥ साहित्यं द्वितीयार्थः, अनुस्तद्द्योतक इति भावः । ननु अवसितशब्दस्य अवपूर्वात् 'षो अन्तकर्मणि' इति धातोरुत्पन्नत्वात्कथमुक्तार्थलाभ इत्यत आह । **षिञ् बन्धने क्तः इति** ॥ उपसर्गबलेन सम्बन्धवृत्तेरस्मात् क्तप्रत्यय इत्यर्थः । अत्र यदवश्यं पुनःपुनर्लक्ष्यस्य ज्ञापकं तदेव न लक्षणम् । किन्तु सकृत् ज्ञापकमपि । यथा यं कमण्डलुना भवान् अद्राक्षीत्, स छात्र इति । सकृदेव हि कमण्डलुपाणिर्दृष्टः, तस्य कमण्डलुर्लक्षणमिति 'अनुर्लक्षणे' इत्यत्र भाष्ये स्पष्टम् । तेन व्याप्यत्वात्मकलिङ्गमेवात्र लक्षणमिति न भ्रमितव्यम् । **हीने** ॥ **हीने द्योत्ये इति** ॥

## ५५१ । उपोऽधिके च । (१-४-८७)

अधिके हीने च द्योत्ये उपेत्यव्ययं प्राक्संज्ञं स्यात् । अधिके, सप्तमी वक्ष्यते । हीने, उप हरिं सुराः ।

## ५५२ । लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः । (१-४-९०)

एष्वर्थेषु विषयभूतेषु प्रत्यादय उक्तसंज्ञाः स्युः । लक्षणे, वृक्षं प्रति–परि--अनु वा विद्योतते विद्युत् । इत्थम्भूताख्याने, भक्तो विष्णुं प्रति–परि–अनु वा । भागे, लक्ष्मीर्हरिं प्रति--परि–अनु वा । हरेर्भाग इत्यर्थः ।

निकर्षे द्योत्ये इत्यर्थः । हीन इति भावे क्तः । 'ओ हाक् त्यागे' इति धातोरोदित्त्वात् 'ओदितश्च' इति निष्ठानत्वम् । **अनुः प्राग्वदिति** ॥ कर्मप्रवचनीयसंज्ञ इत्यर्थः । **अनु हरिं सुराः इति** ॥ अत्र निकृष्टभावोऽनुद्योत्यो द्वितीयार्थः । तदाह । **हरेर्हीना इत्यर्थः इति** ॥ हरेरिति षष्ठी प्रतियोगितायाम्, हरिप्रतियोगिकनिकर्षवन्त इत्यर्थः । **उपोऽधिके च** ॥ चकारात् हीने इति समुच्चीयते । तदाह । **अधिके हीने चेति** ॥ आधिक्ये निकर्षे चेत्यर्थः । **प्राक्संज्ञमिति** ॥ प्रागुक्तकर्मप्रवचनीयसंज्ञकमित्यर्थः । अधिके संज्ञाविधानं न द्वितीयार्थमित्याह । **अधिके सप्तमी वक्ष्यते इति** ॥ 'यस्मादधिकम्' इत्यनेन कर्मप्रवचनीयसंज्ञाकार्ये सप्तमी वक्ष्यत इत्यर्थः । **हीने इति** ॥ उदाहरणं वक्ष्यते इति शेषः । **उपहरिं सुराः इति** ॥ हरेर्हीना इत्यर्थः । **लक्षणेत्थंभूत** ॥ लक्षणं ज्ञापकम्, अयं प्रकारः इत्थं, तं प्राप्तः इत्थंभूतः, तस्याख्यानमुपपादकमित्थंभूताख्यानम्, भागः स्वीकार्योंऽशः, तत्स्वामी विवक्षितः, व्याप्तुं कार्त्स्न्येन सम्बद्धुमिच्छा वीप्सा, लक्षणञ्च इत्थंभूताख्यानञ्च भागश्च वीप्सा चेति द्वन्द्वाद्विषयसप्तमी । तदाह । **एष्विति** ॥ एष्वर्थेषु द्योत्येष्विति तु नाश्रितम् । व्याप्तुमिच्छायास्तद्द्योत्यार्थत्वाभावादिति भावः । **लक्षणे इति** ॥ उदाहरणं वक्ष्यते इति शेषः । **वृक्षं प्रतीति** ॥ लक्ष्यलक्षणभावसम्बन्धो द्वितीयार्थः । स च प्रत्यादिद्योत्यः । वृक्षेण लक्ष्यमाणा विद्युत् विद्योतते इत्यर्थः । उत्पन्नविनष्टा विद्युत्, तदुत्पादितो वृक्षप्रकाशोऽपि उत्पन्नविनष्ट एव । तथाच वृक्षप्रकाशोत्तरं विद्युतोऽसत्त्वेन प्रत्यक्षाभावादनुमेया सा । ततश्च प्रकाशितेन वृक्षेण विद्युद्ज्ञानात् वृक्षो लक्षणम् । **इत्थम्भूताख्याने इति** ॥ उदाहरणं वक्ष्यत इति शेषः । **भक्तो विष्णुं प्रतीति** ॥ भज सेवायाम् । भक्तिरस्त्यस्येति भक्तः, मत्वर्थीयोऽर्श आद्यच्, विषयतासम्बन्धः प्रत्यादिद्योत्यो द्वितीयार्थः, तस्य भक्तावेकदेशेऽन्वयः, विष्णुविषयकभक्तिमानित्यर्थः । अत्र भक्तः भक्तिरूपं प्रकारविशेषं प्राप्तत्वात् इत्थम्भूतः, तस्य विष्णुविषयकतया उपपाद्यत्वाद्विषयतासम्बन्धस्तदुपपादकः प्रतिद्योत्य इति ज्ञेयम् । **भागे इति** ॥ उदाहरणं वक्ष्यत इति शेषः । **लक्ष्मीर्हरिं प्रतीति** ॥ स्वामित्वं द्वितीयार्थः प्रत्यादिद्योत्यः । तदाह । **हरेर्भाग इत्यर्थः इति** ॥ हरेः स्वभूतेति

वीप्सायाम्, वृक्षं वृक्षं प्रति–परि–अनु वा, सिञ्चति । अत्रोपसर्गत्वाभावान्न षत्वम् । 'एषु' किम् । परिषिञ्चति ।

## ५५३ । अभिरभागे । (१-४-९१)

भागवर्जे लक्षणादावभिरुक्तसंज्ञः स्यात् । हरिमभि वर्तते । भक्तो हरिमभि । देवं देवमभि सिञ्चति । 'अभागे' किम् । यदत्र ममाभिष्यात्तद्दीयताम् ।

## ५५४ । अधिपरी अनर्थकौ । (१-४-९३)

---

यावत् । **वीप्सायामिति** ॥ उदाहरणं वक्ष्यत इति शेषः । **वृक्षं वृक्षं प्रतीति** ॥ 'नित्यवीप्सयोः' इति द्विर्वचनम् । अत्र सन्वाच्या इच्छास्वरूपा सती व्याप्तिरेव तु विवक्षिता, सा च कात्स्न्र्येन सम्बन्धात्मिका । तथाच प्रकृत्यर्थगतकात्स्न्र्यमेव व्याप्तिः, सा यद्यपि द्विर्वचनद्योत्या, तथापि प्रतिपर्यनुयोगे तद्द्योत्यत्वमपि । तथाच कृत्स्नं वृक्षं सिञ्चतीत्यर्थः । व्यक्तिकात्स्न्र्यमिह विवक्षितम्, नत्ववयवकात्स्न्र्यमिति 'नित्यवीप्सयोः' इत्यत्र भाष्ये स्पष्टम् । ननु सेचने वृक्षस्य कर्मत्वादेव द्वितीयासिद्धेः किमिह कर्मप्रवचनीयसंज्ञयेत्यत आह । **अत्रेति** ॥ गत्युपसर्गसंज्ञापवादः कर्मप्रवचनीयसंज्ञेत्युक्तम्, अतोऽत्र प्रतेः कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधात् 'उपसर्गात् सुनोति' इति षत्वन्न भवति । कर्मप्रवचनीयत्वाभावे तु प्रतेरुपसर्गत्वात्ततः परस्य सिञ्चतेस्सस्य षत्वं स्यादित्यर्थः । भाष्ये तु "किमर्थमिदमुच्यते, कर्मत्वादेव द्वितीया सिध्यति, उपसर्गसंज्ञानिवृत्तिस्तु न प्रयोजनम् । क्रियायोगाभावेन तदप्रसक्तेरित्याक्षिप्य द्वितीयार्थमेवैतत् कर्मप्रवचनीयसंज्ञाविधानम्" इत्युक्तम् । "वृक्षस्य सेचने कर्मत्वेऽपि तदविवक्षायां सम्बन्धविवक्षायां षष्ठीं बाधितुमिदं कर्मप्रवचनीयत्वविधानम् । किञ्च वृक्षस्य सेचने कर्मत्वेऽपि प्रथमतः प्रतिद्योत्यसम्बन्धे अन्वयेन अन्तरङ्गत्वात्तन्निमित्तषष्ठीबाधनार्थमिदम् । वृक्षं वृक्षं प्रति पक्षिण आसते इत्यादौ अकर्मकधातुयोगे अधिकरणादिसंज्ञानिरासार्थञ्चेदमिति भाष्याशयः" इति शब्देन्दुशेखरे मञ्जूषायाञ्च स्पष्टम् । **एषु किमिति** ॥ 'लक्षणेत्थम्भूताख्यानभागवीप्सासु' इति किमर्थमित्यर्थः । **परिषिञ्चतीति** ॥ अग्निमित्यादि शेषः । अत्र लक्षणाद्यभावात् कर्मप्रवचनीयत्वाभावे 'उपसर्गात्सुनोति' इति षत्वमिति भावः । **अभिरभागे** ॥ **लक्षणादाविति** ॥ आदिना इत्थंभूताख्यानवीप्सयोस्सङ्ग्रहः । लक्षणे उदाहरति । **हरिमभि वर्तत इति** ॥ जयः क्वेति प्रश्ने इदमुत्तरम् । लक्ष्यभावः अभिद्योत्यो द्वितीयार्थः । हरिलक्ष्यो जय इत्यर्थः । **भक्तो हरिमभीति** ॥ इत्थम्भूताख्याने उदाहरणमिदम् । विषयतासम्बन्धः अभिद्योत्यो द्वितीयार्थः । हरिविषयकभक्तिमानित्यर्थः । वीप्सायामुदाहरति । **देवं देवमभि सिञ्चतीति** ॥ कात्स्न्र्यसम्बन्धात्मिका व्याप्तिर्द्वितीयार्थः, अभिद्योत्यश्च । कृत्स्नं देवमभि सिञ्चतीत्यर्थः । षत्वाभावादि पूर्ववत् । **यदत्रेति** ॥ बहूनां द्रव्यं तण्डुलादि यत्र संसृष्टं तत्रेदं वाक्यम् । स्वस्वामिभावः षष्ठ्यर्थः । अभिस्तद्द्योतकः । अत्र संसृष्टद्रव्ये यत् वस्तु मम स्वभूतं स्यात्, तत् मह्यं दीयतामित्यर्थः । स्यादित्यस्तेर्लिङि रूपम् । अत्र मम भाग इत्यर्थतः पर्यवसानादभाग इति कर्मप्रवचनीयत्वपर्युदासाभावे उपसर्गत्वस्य निर्बाधत्वात् 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति षत्वम् । **अधिपरी अनर्थकौ** ॥

उक्तसंज्ञौ स्तः । कुतोऽध्यागच्छति । कुतः पर्यागच्छति । गतिसंज्ञाबाधात् 'गतिर्गतौ' (सू ३९७७) इति निघातो न ।

## ५५५ । सुः पूजायाम् । (१-४-९४)

सु सिक्तम्, सु स्तुतम् । अनुपसर्गत्वान्न षः । 'पूजायाम्' किम् । सुषिक्तं किं स्यात् तवात्र । क्षेपोऽयम् ।

## ५५६ । अतिरतिक्रमणे च । (१-४-९५)

अतिक्रमणे पूजायां च अतिः कर्मप्रवचनीयसंज्ञः स्यात् । अति देवान्कृष्णः ।

## ५५७ । अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु । (१-४-९६)

एषु द्योत्येष्वपिरुक्तसंज्ञः स्यात् । सर्पिषोऽपि स्यात् । अनुपसर्गत्वान्न षः ।

---

**उक्तसंज्ञौ स्त इति** ॥ कर्मप्रवचनीयसंज्ञकावित्यर्थः । **कुतोऽध्यागच्छति, कुतः पर्यागच्छतीति** ॥ अत्र कुत इत्यपादानपञ्चम्यास्तसिल् । कस्मात् प्रदेशादागच्छतीत्यर्थः । नन्वत्र अधिपर्योरनर्थकतया सम्बन्धस्य तद्द्योत्यत्वाभावेन द्योत्यसम्बन्धप्रतियोगित्वरूपकर्मप्रवचनीययुक्तत्वस्याभावान्न द्वितीयाप्रसक्तिरित्यत आह । **गतिसंज्ञाबाधादिति** ॥ अत्र 'गतिर्गतौ' इत्यत्र पदादित्यधिकारात् पदात्परत्वसम्पत्तये कुत इत्युपात्तमिति भावः । अत्र प्रभवति पराभवति अनुभवतीत्यादौ प्रादेरिवार्थान्तरद्योतकत्वाभावेऽपि धात्वर्थद्योतकत्वमस्त्येव । अर्थान्तरद्योतकत्वाभावेन अनर्थकत्वव्यवहारः । उक्तञ्च भाष्ये—"अर्थान्तरवाचिनौ धातुनोक्तक्रियामेवाहतुः" इति । एवञ्च क्रियायोगाभावात् गतित्वस्यापि न प्रसक्तिरिति शङ्का निरस्ता । **सुः पूजायाम्** ॥ कर्मप्रवचनीय इति शेषः । **सु सिक्तं, सु स्तुतमिति** ॥ अत्र सोः कर्मप्रवचनीयत्वे प्रयोजनमाह । **अनुपसर्गत्वान्न षः इति** ॥ 'उपसर्गात् सुनोति' इत्यनेनेति शेषः । **पूजायां किमिति** ॥ सुना पूजायाः नित्यं प्रतीतेः प्रश्नः । **सुषिक्तं किं स्यात् तवात्रेति** ॥ त्वया सम्यक् सिक्तं किन्तु अत्रास्मिन् सुसेके कृते सति सेक्तुस्तव किं, न किञ्चिदपीत्यर्थः । **क्षेपोऽयमिति** ॥ निन्दात्र गम्यत इत्यर्थः । सेकक्रियाकर्तुः पूज्यत्वे गम्य एवात्र कर्मप्रवचनीयत्वम् । तदभावात् 'उपसर्गात् सुनोति' इति षत्वमिति भावः । **अतिरतिक्रमणे च** ॥ चकारात् पूजायामिति समुच्चीयत इत्याह । **पूजायाञ्चेति** ॥ अतिक्रमणमुचितादाधिक्यम् । **अति देवान् कृष्णः इति** ॥ प्रपञ्चसंरक्षणविषये देवेभ्योऽधिकः कृष्ण इत्यर्थः । देवानां पूज्य इति वा । आद्येऽर्थे 'कुगतिप्रादयः' इति समासो न । 'स्वती पूजायाम्' इति नियमात् । द्वितीये त्वनभिधानान्नेत्याहुः । **अपिः पदार्थ** ॥ पदार्थश्च सम्भावनञ्च अन्ववसर्गश्च गर्हा च समुच्चयश्चेति द्वन्द्वः । एषु द्योतकतया विद्यमानः अपिः कर्मप्रवचनीय इत्यर्थः । तदाह । **एष्विति** ॥ अप्रयुज्यमानस्य पदान्तरस्यार्थः पदार्थः,

सम्भावनायां लिङ् । तस्या एव विषयभूते भवने कर्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन्नपिशब्दः स्यादित्यनेन सम्बध्यते । 'सर्पिषः' इति षष्ठी त्वपिशब्दबलेन गम्यमानस्य बिन्दोरवयवावयविभावसम्बन्धे । इयमेव ह्यपि-शब्दस्य पदार्थद्योतकता नाम । द्वितीया तु नेह प्रवर्तते । सर्पिषो बिन्दुना योगो न त्वपिनेत्युक्तत्वात् । अपि स्तुयाद्विष्णुम्, सम्भावनं शक्त्युत्कर्षमा-

---

तद्द्योतकमपिमुदाहरति । **सर्पिषोऽपि स्यादिति** ॥ यत्रातिदौर्लभ्यादत्यल्पमाज्यं भुञ्जानेभ्यो दीयते तदुपहासार्थमिदं वाक्यम्। अत्रापेः कर्मप्रवचनीयत्वे प्रयोजनमाह। **अनुपसर्गत्वान्न षः इति** ॥ 'उपसर्गप्रादुर्भ्याम्' इत्यनेनेति शेषः। अपिद्योत्यं पदार्थं विशदयितुमाह। **सम्भावनायां लिङिति** ॥ 'उपसंवादाशङ्कयोश्च' इति सूत्रे 'उपसंवादाशङ्कयोर्लिङ्' इति पठितवचनेनेति शेषः। तत्र आशङ्का उत्कटान्यतरकोटिका शङ्का । सम्भावनैवेति भावः। सा च प्रकृत्यर्थगता भवति, 'प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः। असधातोश्च भवनमर्थः। 'अस भुवि' इत्युक्तेः। भवनञ्च सत्ता । 'भू सत्तायाम्' इत्युक्तेः। ततश्च सम्भावनाविषयीभूतभवनार्थकादसधातोः कर्तरि लिङि श्नसोरल्लोपे यासुडागमादौ स्यादिति रूपम् । तेन च सम्भावनाविषयभवनाश्रयः कर्ता अवगतः, सच कर्ता क इत्याकाङ्क्षायां प्रकरणात् औचित्यात् सर्पिष इत्यवयवषष्ठीबलाच्च बिन्दु-रिति गम्यते, तमेवापिशब्दो द्योतयति, सच बिन्दुरपिशब्दद्योत्यः कर्ता प्रकृत्यर्थे सम्भावना-विषये भवने स्वस्य बिन्दोर्दौर्लभ्यात् तदेव दौर्लभ्यं पुरस्कृत्यान्वेति । सम्भावनाविषयत्वबोधे दौर्लभ्यस्यापि सम्भावनाविषयतया अनुभवसिद्धत्वात्, तदिदं दौर्लभ्यमपिशब्दो द्योतयति । एवञ्च बिन्दोः कर्तृविशेषरूपेण स्वद्योत्योक्तदौर्लभ्यसम्बन्धेन स्यादित्यत्रान्वयः । तदाह । **तस्या एवेति** ॥ सम्भावनाया एवेत्यर्थः । कर्तुर्बिन्दोर्दौर्लभ्यात् भवनक्रियायां यत् दौर्लभ्यं तद्द्योतयन् अपिशब्दः स्यादित्यनेन सम्बध्यत इत्यर्थः । ननु सर्पिरेव कर्तृत्वेनान्वेतु इत्यत आह । **सर्पिषः इति** ॥ सम्बन्ध इत्यनन्तरं वर्तत इति शेषः । एवञ्च सर्पिरवयवबिन्दुदौर्ल-भ्यप्रयुक्तदौर्लभ्यवती बिन्दुकर्तृका सम्भावनाविषयीभूता सत्तेति बोधः । **इयमेवेति** ॥ बिन्दु-दौर्लभ्यप्रयुक्तदौर्लभ्यद्योतकतैवेत्यर्थः। ननु कर्मप्रवचनीयेनापिना अन्वयसत्त्वात् सर्पिषो द्वितीया स्यादित्यत आह । **द्वितीया तु नेति** ॥ कुत इत्यत आह । **सर्पिष इति** ॥ सर्पिषः बिन्दु-नैव योगः, न त्वपिनेत्येवं सर्पिष इति षष्ठी त्वित्यादिसन्दर्भेण उक्तत्वादित्यर्थः । कर्मप्रवचनीय-द्योत्यसम्बन्धप्रतियोगित्वमेव कर्मप्रवचनीययुक्तत्वम्, प्रकृते च अपिद्योत्यस्य सर्पिषः उक्तसम्ब-न्धस्य बिन्दुरेव प्रतियोगी, नतु सर्पिरिति भावः । तदेवं पदार्थद्योतकमपिमुदाहृत्य सम्भावना-द्योतकमपिमुदाहरति । **अपि स्तुयाद्विष्णुमिति** ॥ 'सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे' इति लिङ्। सम्भावनपदं व्याचष्टे । **सम्भावनमित्यादिना** ॥ अवाङ्मनसगोचरं विष्णु-मपि स्तुयात् । स्तोतुं शक्त इत्यर्थः । अत्युक्तिरियम् । अवाङ्मनसगोचरस्य विष्णोः केनापि स्तोतुमशक्यत्वात् । तत्र कर्मप्रवचनीयत्वेन उपसर्गत्वबाधात् 'उपसर्गात् सुनोति' इति षत्वन्न।

विष्कर्तुमत्युक्तिः । अपि स्तुहि, अन्ववसर्गः कामचारानुज्ञा । धिग्देवदत्तम् अपि स्तुयाद्वृषळम्, गर्हा । अपि सिञ्च, अपि स्तुहि, समुच्चये ।

## ५५८ । कालाध्वनोरत्यन्तसंयोगे । (२-३-५)

इह द्वितीया स्यात् । मासं कल्याणी । मासमधीते । मासं गुडधानाः । क्रोशं कुटिला नदी । क्रोशमधीते । क्रोशं गिरिः । 'अत्यन्तसंयोगे' किम् । मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः ।

इति द्वितीया विभक्तिः ।

---

अन्ववसर्गद्योतकमपिमुदाहरति । **अपि स्तुहीति** ॥ स्तुहि वा न वा यथेष्टं कुर्वित्यर्थः । अन्ववसर्गपदं व्याचष्टे । **अन्ववसर्गः कामचारानुज्ञेति** ॥ 'प्रैषातिसर्ग' इति लोट् । गर्हाद्योतकमपिमुदाहरति । **अपि स्तुयाद्वृषळमिति** ॥ 'गर्हायां लडपिजात्वोः' इति लटं वाधित्वा परत्वादन्तरङ्गत्वाच्च सम्भावनायां लिङ् । अत्र वृषळस्य निन्द्यत्वात् तत्स्तुतेर्निन्द्यत्वं गम्यमानमपिशब्दो द्योतयति । धिग्देवदत्तमिति तदनुवादः । समुच्चयद्योतकमपिमुदाहरति । **अपि सिञ्च, अपि स्तुहीति** ॥ अपिद्वयेन मिळितेन समुच्चयद्योतनात् प्रत्येकं कर्मप्रवचनीयत्वादुभयत्रापि षत्वाभावः । सिञ्च, स्तुहि चेत्यर्थः । **कालाध्वनोः** ॥ **इहेति** ॥ कालाध्वनोरत्यन्तसंयोगे इत्यर्थः । निरन्तरसंयोगः अत्यन्तसंयोगः । अन्तः विच्छेदः तमतिक्रान्तः अत्यन्तः स चासौ संयोगश्चेति विग्रहः । गुणक्रियाद्रव्यैरित्यौचित्यात् गम्यते । गुणक्रियाद्रव्यैः कालाध्वनोरविच्छिन्नसंयोगे गम्ये द्वितीया स्यादित्यर्थः । सा च कालाध्वभ्यामेव भवति, श्रुतत्वात् । तत्र गुणात्यन्तसंयोगे उदाहरति । **मासं कल्याणीति** ॥ भवतीति शेषः । त्रिंशद्दिनात्मको मासः । तस्मिन्नविच्छिन्नमङ्गळवानित्यर्थः । क्रियात्यन्तसंयोगे उदाहरति । **मासमधीते इति** ॥ त्रिंशद्दिनात्मके प्रतिदिनमुचितकाले निरन्तरमधीत इत्यर्थः । द्रव्यात्यन्तसंयोगे उदाहरति । **मासं गुडधानाः इति** ॥ मासे प्रतिदिनं निरन्तरं गुडधानास्सन्तीत्यर्थः । कालात्यन्तसंयोगमुदाहृत्य अध्वात्यन्तसंयोगे उदाहरति । **क्रोशं कुटिला नदीत्यादि** ॥ **मासस्य द्विरिति** ॥ मासे त्रिंशद्दिनात्मके द्वयोर्दिनयोः प्रतिदिनमेकवारमित्येवं द्विरधीत इत्यर्थः । 'द्वित्रिचतुर्भ्यस्सुच्' इति द्विशब्दात् कृत्वोऽर्थे सुच् । 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' इति षष्ठी । शेषषष्ठीति केचित् । 'शिवरात्रौ जागृयात्' इत्यत्र तु अधिकरणत्वस्य विवक्षितत्वात् सप्तमीत्याहुः । उपपदविभक्तीनां शेषत्वविवक्षायामेव प्रवृत्तेरिति तदाशयः ॥

इति द्वितीया विभक्तिः ।

## अथ तृतीया विभक्तिः ।

### ५५९ । स्वतन्त्रः कर्ता । (१-४-५४)

क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ।

### ५६० । साधकतमं करणम् । (१-४-४२)

क्रियासिद्धौ प्रकृष्टोपकारकं कारकं करणसंज्ञं स्यात् । तमब्ग्रहणं किम् । गङ्गायां घोषः ।

### ५६१ । कर्तृकरणयोस्तृतीया । (२-३-१८)

अनभिहिते कर्तरि करणे च तृतीया स्यात् । रामेण बाणेन हतो वाली । 'प्रकृत्यादिभ्य उपसंख्यानम्' (वा १४६६) । प्रकृत्या चारुः ।

---

अथ तृतीया विभक्तिः—**स्वतन्त्रः कर्ता** ॥ कारकाधिकारात् क्रियाजनने स्वातन्त्र्यमिह विवक्षितमित्याह । **क्रियायामिति** ॥ स्वातन्त्र्यमिह प्राधान्यमिति भाष्ये स्पष्टम् । ननु स्थाली पचतीत्यादौ कथं स्थाल्यादीनां कर्तृत्वं, स्वातन्त्र्याभावादित्यत आह । **विवक्षितोऽर्थ इति** ॥ 'विवक्षातः कारकाणि भवन्ति' इति भाष्यादिति भावः । स्वातन्त्र्यञ्च धात्वर्थव्यापाराश्रयत्वम् । फलानुकूलव्यापारो धात्वर्थः । तत्र पचतीत्यत्र विक्लित्तिरूपफलाश्रये तण्डुलेऽतिव्याप्तिवारणाय व्यापारेति । उक्तञ्च हरिणा—"धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते" इति । धातूपात्तव्यापारवतीत्यर्थः । **साधकतमं करणम्** ॥ **क्रियासिद्धाविति** ॥ क्रियोत्पत्तावित्यर्थः । कारकाधिकारलभ्यमिदम् । **प्रकृष्टोपकारकमिति** ॥ कर्त्रा क्रियायां जनयितव्यायां यत् सहायभूतं तदुपकारकमित्युच्यते । साधकतममित्यस्य व्याख्यानमेतत् । साधकशब्दात् 'अतिशायने तमप्' इति तमप् । अतिशयितं साधकं साधकतममिति भावः। यद्व्यापारानन्तरं क्रियानिष्पत्तिः तत् प्रकृष्टम् । कर्तृव्यापाराधीनयद्व्यापाराव्यवहिता क्रियानिष्पत्तिः तत्तस्यां करणमिति यावत् । **तमब्ग्रहणं किमिति** ॥ साधकमित्येवोच्यताम् । कारकाधिकारादेव सिद्धे पुनस्साधकग्रहणादेव प्रकृष्टं साधकमिति विज्ञायत इति प्रश्नः । **गङ्गायां घोषः इति** ॥ अयमाशयः । कारकप्रकरणे गौणमुख्यन्यायः एतत्सूत्रादन्यत्र न प्रवर्तते इति ज्ञापनार्थं तमब्ग्रहणम् । अन्यथा 'आधारोऽधिकरणम्' इत्यत्र अन्वर्थमहासंज्ञाबलादेवाधारलाभे पुनस्तद्ग्रहणसामर्थ्यात् सर्वावयवव्याप्त्या य आधारस्सोऽधिकरणमित्यर्थस्स्यात् । एवञ्च तिलेषु तैलं, दध्नि सर्पिरित्यादावेव स्यात् । गङ्गायां घोषः, कूपे गर्गकुलमित्यादौ न स्यात् । अतस्तमब्ग्रहणमिति भाष्ये स्पष्टम् । अत्र यद्वक्तव्यं तत् 'आधारोऽधिकरणम्' 'सप्तम्यधिकरणे च' इत्यत्र वक्ष्यते । **कर्तृकरणयोस्तृतीया** ॥ 'अनभिहिते' इत्यधिकारादाह । **अनभिहित इति** ॥ **रामेणेति** ॥ रामकर्तृकबाणकरणकहिंसाक्रियाविषयो वालीत्यर्थः । **प्रकृत्यादिभ्य उपसङ्ख्यानमिति** ॥

प्रायेण याज्ञिकः । गोत्रेण गार्ग्यः । समेनैति । विषमेणैति । द्विद्रोणेन धान्यं क्रीणाति । सुखेन दुःखेन वा यातीत्यादि ।

## ५६२ । दिवः कर्म च । (१-४-४३)

दिवः साधकतमं कारकं कर्मसंज्ञं स्याच्चात्करणसंज्ञम् । अक्षैरक्षान्वा दीव्यति ।

## ५६३ । अपवर्गे तृतीया । (२-३-६)

अपवर्गः फलप्राप्तिः, तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात् । अह्ना क्रोशेन वा अनुवाकोऽधीतः । अपवर्गे किम् । मासमधीतो नायातः ।

---

तृतीयाया इति शेषः । उपपदविभक्तिरियम् । यथायोगं सर्वविभक्त्यपवादः । **प्रकृत्या चारुरिति** ॥ सम्बन्धस्तृतीयार्थः । प्रकृतिः स्वभावः, तत्सम्बन्धिचारुत्ववानित्यर्थः । यदा तु स्वभावेनैवायमभिरूपः न त्वलङ्कारादिनेति करणान्तरव्युदासाय प्रकृतेः करणत्वं विवक्ष्यते तदा 'कर्तृकरणयोः' इत्येव सिद्धमिति भाष्यम् । **प्रायेण याज्ञिक इति** ॥ प्रायशब्दो बहुळवाची । बहुळाचारसम्बन्धियाज्ञिकत्ववानित्यर्थः । सम्बन्धश्च ज्ञाप्यज्ञापकभावः । बहुळेन आचारेण हेतुना ज्ञाप्ययाज्ञिकत्ववानित्यर्थे तु 'इत्थम्भूतलक्षणे' इत्येव सिद्धम् । बहुळेन आचारेण सम्पन्नयाज्ञिकत्ववानित्यर्थे तु करणत्वादेव सिद्धमिति भाष्यम् । **गोत्रेण गार्ग्य इति** ॥ गोत्रमस्य गार्ग्य इत्यर्थः । अत्र प्रथमा प्राप्ता । "गोत्रेण हेतुना ज्ञाप्यगार्ग्यत्ववानित्यर्थे तु 'इत्थम्भूतलक्षणे' इत्येव सिद्धम्" इति भाष्यम् । **समेनैति, विषमेणैतीति** ॥ क्रियाविशेषणमेतत् । समं विषमञ्च गमनं करोतीत्यर्थः । कर्मणि द्वितीया प्राप्ता । "समेन विषमेण वा पथा एतीत्यर्थे तु करणत्वादेव सिद्धम्" इति भाष्यम् । **द्विद्रोणेन धान्यं क्रीणातीति** ॥ द्वयोर्द्रोणयोस्समाहारः द्विद्रोणम् । पात्रादित्वान्न स्त्रीत्वम् । द्विद्रोणसम्बन्धि धान्यमित्यर्थः । षष्ठी प्राप्ता । "यदा तु द्विद्रोणपरिमितधान्यमूल्यं हिरण्यं द्विद्रोणं, तेन क्रीणातीत्यर्थे तु करणत्वादेव सिद्धम्" इति भाष्यम् । **सुखेनेति** ॥ सुखजनकं यानं करोतीत्यर्थः । क्रियाविशेषणम् । द्वितीया प्राप्ता । **इत्यादीति** ॥ नाम्ना सुतीक्ष्णः नामसम्बन्धिसुतीक्ष्णत्ववानित्यर्थः । नामज्ञाप्यसुतीक्ष्णत्ववानित्यर्थे तु 'इत्थम्भूतलक्षणे' इत्येव सिद्धम् । धान्येन धनवानित्यत्र तु अभेदस्तृतीयार्थः । धान्याभिन्नधनवानित्यर्थः । वह्नित्वेन वह्निं जानामीत्यत्र तु प्रकारत्वं तृतीयार्थः । वह्नित्वप्रकारकवह्निज्ञानवानस्मीत्यर्थः । इत्याद्यूह्यम् । **दिवः कर्म च** ॥ साधकतममित्यनुवर्तते । तदाह । **दिवस्साधकतममिति** ॥ दिवुधात्वर्थं प्रति साधकतममित्यर्थः । **चादिति** ॥ चकारात् करणसंज्ञकमित्यपि लभ्यत इत्यर्थः । **अपवर्गे तृतीया** ॥ अपवर्गस्समाप्तिः । 'कर्मापवर्गे लौकिका अग्नयः' इत्यादौ दर्शनात् । इह तु फलप्राप्तिर्विवक्षिता । फलप्राप्तिपर्यन्तत्वात् प्रायेण क्रियायाः । तदाह । **अपवर्गः फलप्राप्तिरिति** ॥ **कालाध्वनोः इति** ॥ अनेन 'कालाध्वनोः' इति द्वितीयाया अयमपवाद इति सूचितम् । **अह्नेति** ॥ अह्नि क्रोशे वा निरन्तरम्

## ५६४ । सहयुक्तेऽप्रधाने । (२-३-१९)

सहार्थेन युक्तेऽप्रधाने तृतीया स्यात् । पुत्रेण सहागतः पिता । एवं साकंसार्धसमंयोगेऽपि । विनापि तद्योगं तृतीया । 'वृद्धो यूना—' (सू ९३१) इत्यादिनिर्देशात् ।

## ५६५ । येनाङ्गविकारः । (२-३-२०)

येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यात् । अक्ष्णा काणः । अक्षिसम्बन्धिकाणत्वविशिष्ट इत्यर्थः । अङ्गविकारः किम् । अक्षि काणमस्य ।

## ५६६ । इत्थम्भूतलक्षणे । (२-३-२१)

कञ्चित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात् । जटाभिस्तापसः । जटाज्ञाप्यस्तापसत्वविशिष्ट इत्यर्थः ।

---

अनुवाकोऽध्ययनेन गृहीत इत्यर्थः । **नायात इति** ॥ न गृहीत इत्यर्थः । **सहयुक्ते** ॥ 'पृथग्विनानानाभिः' इतिवत् सहेनेत्येव सिद्धे युक्तग्रहणं सहार्थकशब्दानां साकमित्यादीनामपि ग्रहणार्थमित्याह । **सहार्थेनेति** ॥ **पुत्रेणेति** ॥ पितुरत्रागमनक्रियासम्बन्धश्शाब्दः । पुत्रस्य तु तत्साहित्यगम्य आर्थिक इति तस्याप्राधान्यम् । "यद्यप्यागमनक्रियाकर्तृत्वादेव पुत्रात् तृतीया सिद्धा । तथापि पुत्रेण सह स्थूल इत्याद्येवास्य मुख्योदाहरणम्" इति भाष्ये स्पष्टम् । अर्थग्रहणस्य प्रयोजनमाह । **एवं साकमिति** ॥ ननु 'पुत्रेणागतः पिता' इत्यत्र सहादिशब्दाभावात् कथं तृतीयेत्यत आह । **विनापीति** ॥ 'वृद्धो यूना तल्लक्षणश्चेत्' इति सूत्रे सहादिशब्दाभावेऽपि तदर्थावगमेऽपि तृतीयानिर्देशदर्शनादित्यर्थः । **येनाङ्गविकारः** ॥ अङ्गान्यस्य सन्तीत्यङ्गं शरीरम् । अर्श आद्यच् । तस्य विकार इति विग्रहः । येनेत्यनेन प्रकृत्यर्थभूतमङ्गं परामृश्यते । नह्यविकृतेन अङ्गेन आङ्गिनो विकारस्सम्भवति । तदाह । **येनाङ्गेनेत्यादिना** ॥ **अक्ष्णा काणः इति** ॥ काणशब्दः काणत्ववति वर्तते । सम्बन्धस्तृतीयार्थः । स च काणत्वेऽन्वेति । तदाह । **अक्षिसम्बन्धीति** ॥ सम्बन्धश्च विकारप्रयुक्तत्वरूपः । अक्षिविकारप्रयुक्तकाणत्ववानिति यावत् । यद्यपि एकमक्षि विकलं काणमित्युच्यते । तथाप्यवयविधर्मस्य शरीरे तदवच्छिन्नात्मनि व्यवहारो निरूढः । द्वौ विप्राविितिवत् अक्ष्णेति पदस्य प्रयोगस्समर्थ्यः । **इत्थम्भूतलक्षणे** ॥ अयं प्रकारः इत्थं, तं भूतः प्राप्तः इत्थम्भूतः, 'भू प्राप्तौ' इति चौरादिकात् 'आधृषाद्वा' इति णिजभावे 'गत्यर्थाकर्मक' इत्यादिना कर्तरि क्तः । लक्षणं ज्ञापकं प्रकारविशेषं प्राप्तस्य ज्ञापके सम्बन्धे द्योत्ये इत्यर्थः । तदाह । **कञ्चित्प्रकारमिति** ॥ **जटाभिस्तापस इति** ॥ तपः अस्यास्तीति तापसः । 'तपस्सहस्राभ्यां विनीनी' 'अण्च' इति मत्वर्थीय अण्प्रत्ययः तापसत्ववति वर्तते । लक्ष्यलक्षणभावस्तृतीयार्थः । तदाह । **जटाज्ञाप्येति** ॥ नच ज्ञापने करणत्वा-

## ५६७ । संज्ञोऽन्यतरस्यां कर्मणि । (२-३-२२)

सम्पूर्वस्य जानातेः कर्मणि तृतीया वा स्यात् । पित्रा पितरं वा सञ्जानीते ।

## ५६८ । हेतौ । (२-३-२३)

हेत्वर्थे तृतीया स्यात् । द्रव्यादिसाधारणं निर्व्यापारसाधारणं च हेतुत्वम् । करणत्वं तु क्रियामात्रविषयं व्यापारनियतं च । दण्डेन घटः । पुण्येन दृष्टो हरिः । फलमपीह हेतुः । अध्ययनेन वसति । 'गम्यमानापि

---

देव तृतीया सिद्धेति वाच्यम् । करणत्वाविवक्षायां लक्ष्यलक्षणभावस्य सम्बन्धत्वेन विवक्षायां तृतीयार्थत्वात् । **संज्ञोऽन्यतरस्यां कर्मणि** ॥ सम्पूर्वस्य ज्ञाधातोरनुकरणात् षष्ठ्येकवचनं संज्ञ इति । तदाह । **सम्पूर्वस्य जानातेरिति** ॥ द्वितीयापवादोऽयं तृतीयाविकल्पः । **सञ्जानीते इति** ॥ सम्यक् जानीते इत्यर्थः । 'सम्प्रतिभ्यामनाध्याने' इत्यात्मनेपदम् । **हेतौ** ॥ **हेत्वर्थे इति** ॥ हेतुरिह कारणपर्यायो लौकिक एव विवक्षितः, नतु 'तत्प्रयोजको हेतुश्च' इति कृत्रिमः । तस्य चकारेण कर्तृसंज्ञाया अपि सत्त्वेन कर्तृतृतीययैव सिद्धेः । ननु हेतोरपि करणत्वादेव तृतीयासिद्धेत्याशङ्क्य हेतुत्वकरणत्वयोर्भेदमाह । **द्रव्यादिसाधारणमिति** ॥ आदिना गुणक्रियासङ्ग्रहः । द्रव्यं गुणं क्रियाञ्च प्रति यज्जनकं तत्र सर्वत्र विद्यमानमित्यर्थः । **निर्व्यापारसाधारणञ्चेति** ॥ द्वारीभूतव्यापारवति तद्रहिते च विद्यमानञ्चेत्यर्थः । एवञ्च द्रव्यगुणक्रियात्मककार्यत्रयनिरूपितं निर्व्यापारसव्यापारवृत्ति च यत् तद्धेतुत्वमिति फलति । **करणत्वन्त्विति** ॥ क्रियाजनकमात्रवृत्ति व्यापारवृत्ति च यत् तदेव करणत्वमित्यर्थः । एवञ्च हेतुत्वकरणत्वयोः भेदादन्यतरेण अन्यतरस्य नान्यथासिद्धिरिति भावः । तत्र द्रव्यं प्रति हेतुमुदाहरति । **दण्डेन घटः इति** ॥ दण्डहेतुको घट इत्यर्थः । दण्डे व्यापारसत्त्वेऽपि क्रियाजनकत्वाभावान्न करणत्वमिति भावः । क्रियां प्रति हेतुमुदाहरति । **पुण्येन दृष्टो हरिरिति** ॥ यागादिना स्वर्गादिफले जननीये यदवान्तरव्यापारभूतमपूर्वं तत् पुण्यमित्युच्यते । तस्य हरिदर्शनजनकत्वेऽपि निर्व्यापारत्वान्न करणत्वमिति भावः । गुणं प्रति हेतुत्वे तु पुण्येन ब्रह्मवर्चसमित्याद्युदाहार्यम् । ननु अध्ययनेन वसतीत्यत्र कथं तृतीया । अध्ययनस्य गुरुकुलवासं प्रति हेतुत्वाभावात् । प्रत्युत अध्ययनस्य वाससाध्यत्वादित्यत आह । **फलमपीह हेतुरिति** ॥ अध्ययनं यद्यपि वासफलं, तथापि वासं प्रति हेतुरपि भवति । इष्टसाधनताज्ञानस्य प्रवृत्तिहेतुतया अध्ययनस्य फलस्य स्वज्ञानद्वारा वासजनकत्वात् । यदा त्वध्ययने फले एतादृशं हेतुमविवक्षित्वा अध्ययनार्थमेव वासो विवक्ष्यते, तदा चतुर्थ्येव भवति, अध्ययनाय वसतीति । एतच्च प्रकृतसूत्रे कैयटे स्पष्टम् । ननु अलं श्रमेण इत्यत्र कार्यस्य कस्यचिदप्यश्रवणात् करणत्वहेतुत्वयोरसम्भवात् कथं तृतीयेत्यत आह । **गम्यमानापीति** ॥ न केवलं श्रूयमाणैव क्रिया विभक्तौ प्रयोजिका, किन्तु गम्यमानापीत्यर्थः । करणतृतीयैवेयमित्यभिप्रेत्याह ।

क्रिया कारकविभक्तौ प्रयोजिका'। अलं श्रमेण। श्रमेण साध्यं नास्तीत्यर्थः। इह साधनक्रियां प्रति श्रमः करणम्। शतेन शतेन वत्सान् पाययति पयः। शतेन परिच्छिद्येत्यर्थः। 'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया' (वा ५०४०)। दास्या संयच्छते कामुकः। धर्म्ये तु भार्यायै संयच्छति॥

इति तृतीया विभक्तिः।

---

**अलं श्रमेणेति**॥ ऊषरक्षेत्रं परिष्कुर्वाणं प्रति इदं वाक्यं प्रवृत्तम्। अत्र अलमिति नञर्थे निषेधे वर्तते। 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः। साध्यमित्यध्याहारलभ्यम्। तदाह। **श्रमेण साध्यं नास्तीत्यर्थ इति**॥ सद्यः खेदाधायकत्वात् साधने व्यापृतिरेव श्रम इत्युपचर्यते। नन्वेवमपि साधनीयस्य व्रीह्यादिफलस्य क्रियारूपत्वाभावात् कथं श्रमस्य तत्र करणत्वमित्यत आह। **इहेति**॥ साध्यमित्यत्र प्रकृतिभूतो यो धात्वर्थः साधनक्रिया उत्पत्त्यात्मिका तां प्रतीत्यर्थः। एतेन श्रमस्य साधनक्रियायांश्चाभेद इति निरस्तम्। श्रमशब्देन व्रीह्याद्युत्पत्त्यनुकूलकर्षणादिव्यापारस्य साधनक्रियां प्रतीत्यनेन व्रीह्याद्युत्पत्तेश्च विवक्षितत्वात्। 'गम्यमानापि क्रिया विभक्तौ प्रयोजिका' इत्यत्र उदाहरणान्तरमाह। **शतेनेति**॥ वीप्सायां द्विर्वचनम्। एकैकेन शतेन सङ्ख्यया वत्सान् पाययतीति प्रतीयमानार्थः। तत्र वत्सनिष्ठ-शतसङ्ख्यायाः पायने करणत्वाभावात् परिच्छिद्येति गम्यते। एकैकशतसङ्ख्यया वत्सान् परिच्छिद्य तदधिकवत्सेभ्यो व्यावर्त्य पाययतीत्यर्थः। तथाच शतसङ्ख्यायाः परिच्छेदं प्रति करणत्वमिति भावः। **अशिष्टेति**॥ इदञ्च 'दाणश्च सा चेच्चतुर्थ्यर्थे' इत्यनेन ज्ञाप्यत इति पदव्यवस्थायां वक्ष्यते। वैदिकमार्गानुयायिनश्शिष्टाः, वेदमार्गादपेताः अशिष्टाः, तेषां व्यवहारः आचारः, तस्मिन् विषये दाण्धातोः प्रयोगे सति चतुर्थ्यर्थे सम्प्रदाने तृतीया वाच्येत्यर्थः। **दास्या संयच्छते कामुक इति**॥ दास्यै कामुकः प्रयच्छतीत्यर्थः। कामुक इत्यनेन रत्यर्थमिति गम्यते। दास्यां रतिः धर्मशास्त्रनिषिद्धत्वात् अशिष्टव्यवहार इति भावः। अशिष्टपदप्रयोजनमाह। **धर्म्ये त्विति**॥ धर्मादनपेत इत्यर्थः। न तृतीयेति शेषः। 'धर्मपथ्यर्थन्यायादनपेते' इति यदिति रत्नकारः। धर्मे त्विति पाठस्तु सुगम एव॥

इति तृतीया विभक्तिः।

---

१ इदं च 'दाणश्च सा चेच्चतुर्थ्यर्थे' (१-३-५४) इति सूत्रज्ञापितम्। तत्र 'अशिष्टव्यवहारे' इत्यंशो भाष्यकृतो वाचनिकः।

## अथ चतुर्थी विभक्तिः।

### ५६९। कर्मणा यमभिप्रैति स सम्प्रदानम्। (१-४-३२)

दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात्।

### ५७०। चतुर्थी सम्प्रदाने। (२-३-१३)

विप्राय गां ददाति। अनभिहित इत्येव। दीयतेऽस्मै दानीयो विप्रः। 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्' (वा १०८५)। पत्ये शेते। 'कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा' (वा १०८६)। पशुना रुद्रं यजते। पशुं रुद्राय ददातीत्यर्थः।

### ५७१। रुच्यर्थानां प्रीयमाणः। (१-४-३३)

रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः सम्प्रदानं स्यात्। हरये

---

अथ चतुर्थी विभक्तिः—**कर्मणा यमभि** ॥ कर्मसंज्ञकेन गवादिद्रव्येण यमभिप्रैति शेषित्वेनाध्यवस्यति स सम्प्रदानमित्यर्थः। शेषित्वं भोक्तृत्वम्। सम्प्रदीयते यस्मै तत् सम्प्रदानमित्यन्वर्थसंज्ञैषा। ततश्च कस्याः क्रियायाः कर्मणेत्याकांक्षायां दानस्येति गम्यते। तदाह। **दानस्येत्यादिना** ॥ देयद्रव्योद्देश्यं सम्प्रदानमिति फलितम्। दानस्येति किम्। पयो नयति देवदत्तस्य। अत्र देवदत्तस्य पयोनयनोद्देश्यत्वेऽपि न सम्प्रदानत्वम्। पयसो दानकर्मत्वाभावात्। **चतुर्थी सम्प्रदाने** ॥ **विप्रायेति** ॥ विप्रमुद्दिश्य गां ददातीत्यर्थः। **अनभिहिते इत्येवेति** ॥ अनुवर्तत एवेत्यर्थः। **दानीयो विप्र इति** ॥ दानोद्देश्य इत्यर्थः। 'कृत्यल्युटो बहुळम्' इति बहुळग्रहणात् सम्प्रदाने अनीयर्। तेन कृता सम्प्रदानस्य विप्रस्याभिहितत्वान्न चतुर्थीति भावः। ननु दानक्रियाकर्मोद्देश्यस्यैव सम्प्रदानत्वे पत्ये शेते इत्यत्र अकर्मकशयनक्रियोद्देश्यस्य पत्युः कथं सम्प्रदानत्वमित्याशङ्कायां 'क्रियाग्रहणमपि कर्तव्यम्' इति वार्तिकं प्रवृत्तम्। तदेतदर्थतस्सङ्गृह्णाति। **क्रियया यमिति** ॥ क्रियोद्देश्यमपि सम्प्रदानमिति यावत्। **पत्ये शेते इति** ॥ पतिमुद्दिश्य शेते इत्यर्थः। नन्वेवमपि ओदनं पचतीत्यादावपि सम्प्रदानत्वप्रसङ्गः। न च कर्मसंज्ञाविधिवैयर्थ्यं शङ्क्यम्। अत एव तत्र कर्मत्वसम्प्रदानत्वयोर्विकल्पोपपत्तेरिति चेन्न। पत्ये शेते इत्यकर्मकस्थले सावकाशायाः सम्प्रदानसंज्ञायाः सकर्मकस्थले कर्मसंज्ञया बाधात्। तथाच अकर्मकक्रियोद्देश्यमपि सम्प्रदानमिति फलतीति भावः। **कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा इति** ॥ वार्तिकम्। एकस्मिन् वाक्ये कर्मणस्सम्प्रदानस्य च समवाये सतीति शेषः। यजधातुविषयमेवेदमित्यभिप्रेत्य उदाहरति। **पशुना रुद्रं यजते इति** ॥ अत्र यजधातुर्दानार्थक इत्यभिप्रेत्य आह। **पशुं रुद्राय ददातीत्यर्थ इति** ॥ इदं वार्तिकं छान्दसमेवेति कैयटः। **रुच्यर्थानाम्** ॥ **रुच्यर्थानां धातूनामिति** ॥

रोचते भक्तिः । अन्यकर्तृकोऽभिलाषो रुचिः । हरिनिष्ठप्रीतेर्भक्तिः कर्त्री । 'प्रीयमाणः' किम् । देवदत्ताय रोचते मोदकः पथि ।

## ५७२ । श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः । (१-४-३४)

एषां प्रयोगे बोधयितुमिष्टः सम्प्रदानं स्यात् । गोपी स्मरात्कृष्णाय श्लाघते ह्नुते तिष्ठते शपते वा । 'ज्ञीप्स्यमानः' किम् । देवदत्ताय श्लाघते पथि ।

## ५७३ । धारेरुत्तमर्णः । (१-४-३५)

---

'रुच दीप्तावभिप्रीतौ च' दीप्तिरिह न रुच्यर्थः । प्रीयमाण इति विरोधात् । तथाच प्रीतिजननार्थानामित्यर्थः । **प्रीयमाण इति** ॥ समवायेन प्रीत्याश्रय इत्यर्थः । **हरये रोचते भक्तिरिति** ॥ भक्तिः स्वविषयां प्रीतिं हरौ जनयतीत्यर्थः । भक्तिगतव्यापारप्रयोज्यप्रीत्याश्रयत्वाद्धरेः कर्मत्वं प्राप्तम्, तदपवादोऽयम् । नन्वेवं सति हरिर्भक्तिमभिलषतीत्यत्रापि भक्तेः प्रीतिविषयत्वात् सम्प्रदानत्वं स्यादित्यत आह । **अन्यकर्तृकोऽभिलाषो रुचिरिति** ॥ समवायेन प्रीत्याश्रयापेक्षया यदन्यत् तत्कर्तृकाभिलाषः रुचधात्वर्थः । प्रीत्याश्रयकर्तृकः किञ्चिद्विषयक इच्छाविशेषोऽभिलाषः । तथाच अभिलषतेः रुच्यर्थकत्वाभावान्न तद्योगे सम्प्रदानत्वम् । प्रकृते च प्रीत्याश्रयो हरिः, तदपेक्षया यत् अन्यत् भक्तिः, तत्कर्तृकैव प्रीतिरिति रुच्यर्थयोगः । नन्विह भक्तेस्सम्प्रदानत्वं कुतो न स्यात् । विषयतासम्बन्धेन भक्तेरपि प्रीत्याश्रयत्वादित्यत आह । **हरिनिष्ठप्रीतेर्भक्तिः कर्त्रीति** ॥ हरेरेव समवायसम्बन्धेन प्रीत्याश्रयतया प्रीयमाणत्वात् भक्तेः कर्त्र्या उक्तरीत्या प्रीयमाणत्वाभावाच्च न सम्प्रदानत्वमिति भावः । भक्तिर्हरिं प्रीणाति प्रीणयतीत्यादौ तु न भक्तेस्सम्प्रदानत्वप्रसक्तिः । तिङा अभिहितत्वात् समवायेन प्रीत्याश्रयत्वाभावाच्च । नापि हरेः । प्रीयमाण इति कर्मणि शानच्प्रयोगबलेन प्रीधातुयोगे रुच्यर्थानामित्यस्याप्रसक्तेर्विज्ञानात् । अन्यथा प्रीधातुकर्मणः सम्प्रदानत्वे कर्मणि शानचो दौर्लभ्यात् । **मोदकः पथीति** ॥ अत्र पथः प्रीयमाणत्वाभावान्न सम्प्रदानत्वमिति भावः । **श्लाघह्नुङ्** ॥ 'श्लाघृ कत्थने, ह्नुङ् अपनयने, ष्ठा गतिनिवृत्तौ, शप उपालम्भे' एषां द्वन्द्वः । शपामित्यनन्तरं प्रयोगे इत्यध्याहार्यम् । श्लाघादीनां स्तुत्यादिना बोधनमर्थः । ज्ञीप्स्यमान इति लिङ्गात् ज्ञापनवाचिनो ज्ञपेस्सन्नन्तात् कर्मणि शानच् । तदाह । **एषां प्रयोगे इत्यादिना** ॥ **गोपी स्मरादिति** ॥ मन्मथपीडावशात् गोपी आत्मस्तुत्या विरहवेदनां कृष्णं बोधयतीत्यर्थः । कृष्णस्यैव स्तुत्यत्वे तु द्वितीयैवेत्याहुः । **ह्नुते इति** ॥ सपत्न्यपनयनेन स्वाशयं कृष्णं बोधयतीत्यर्थः । **तिष्ठते इति** ॥ गन्तव्यमित्युक्तेऽपि स्थित्या स्वाशयं कृष्णं बोधयतीत्यर्थः । 'प्रकाशनस्थेयाख्ययोश्च' इत्यात्मनेपदम् । **शपते इति** ॥ उपालम्भेन स्वाशयं कृष्णं बोधयतीत्यर्थः । **धारेरुत्तमर्णः** ॥ धारेरित्यनन्तरं प्रयोगे इत्यध्याहार्यम् । 'धृङ् अवस्थाने' इत्यस्य हेतुमण्ण्यन्तस्य धारेरिति निर्देशः । तदाह । **धारयतेरित्यादिना** ॥ अन्यस्वामिकं द्रव्यं नियतकाले पुनरर्पणबुद्ध्या गृहीतम् ऋणमित्युच्यते । तत्र ऋणस्य ग्रहीता अधमर्णः, ऋण-

धारयतेः प्रयोगे उत्तमर्ण उक्तसंज्ञः स्यात् । भक्ताय धारयति मोक्षं हरिः । 'उत्तमर्णः' किम् । देवदत्ताय शतं धारयति ग्रामे ।

## ५७४ । स्पृहेरीप्सितः । (१-४-३६)

स्पृहयतेः प्रयोगे इष्टः सम्प्रदानं स्यात् । पुष्पेभ्यः स्पृहयति । 'ईप्सितः' किम् । पुष्पेभ्यो वने स्पृहयति । ईप्सितमात्रे इयं संज्ञा । प्रकर्षविवक्षायां तु परत्वात्कर्मसंज्ञा । पुष्पाणि स्पृहयति ।

## ५७५ । क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः । (१-४-३७)

क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः स उक्तसंज्ञः स्यात् । हरये क्रुध्यति, द्रुह्यति, ईर्ष्यति, असूयति वा । 'यं प्रति कोपः' किम् । भार्यामीर्ष्यति ।

---

स्यार्पयिता धनस्वामी उत्तमर्णः । प्रतिमासमशीतिभागादिवृद्ध्या उत्तमम् अधिकतां प्राप्तम् ऋणं यस्येति विग्रहः । **भक्तायेति** ॥ भक्तसम्बन्धी यो मोक्षः अपरिमितनित्यसुखविशेषः तं धारयतीत्यर्थः । धरते मोक्षः, अवतिष्ठते इत्यर्थः । तं प्रेरयति धारयति, अवस्थापयतीति यावत् । पूजयन् हि भक्तः तुळसीदळादिद्रव्यं प्रयच्छति, तच्च गृह्णन् तुष्टो हरिः तत्प्रदत्तद्रव्यं मोक्षदानेन निष्क्रीणाति । तदाहुः पौराणिकाः—"तोयं वा पत्रं वा यद्वा किञ्चित् समर्पितं भक्त्या । तदृणं मत्वा देवो निश्श्रेयसमेव निष्क्रियम्मनुते ॥" इत्यादि । तथाचात्र भक्तस्य ऋणदातृत्वेन उत्तमर्णत्वात् सम्प्रदानत्वं सम्बन्धषष्ठ्यपवादः । **स्पृहेरीप्सितः** ॥ 'स्पृह ईप्सायाम्' चुरादावदन्तः । ततः स्वार्थे णिचि अल्लोपस्य स्थानिवत्त्वात् लघूपधगुणाभावे स्पृहिशब्दात् षष्ठ्येकवचनम् । प्रयोग इत्यध्याहार्यम् । तदाह । **स्पृहयतेरित्यादिना** ॥ ननु पुष्पेभ्यः स्पृहयतीत्येव स्यात्, नतु पुष्पाणि स्पृहयतीत्यपि । उभयं त्विष्यते । तत्राह । **ईप्सितमात्र इति** ॥ यदा त्वीप्सितत्वस्यापि न विवक्षा, किन्तु विषयतामात्रविवक्षा, तदा पुष्पाणां स्पृहयतीति साधु । 'कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च' इत्यादिदर्शनात् । वाक्यपदीये तु स्पृहयतियोगे कर्मसंज्ञायाश्शेषषष्ठ्याश्चायमपवाद इति स्थितम् । हेलाराजोऽप्येवम् । तन्मते पुष्पाणि स्पृहयति पुष्पाणां स्पृहयतीत्याद्यसाध्वेवेत्यन्यत्र विस्तरः । **क्रुधद्रुह** ॥ **क्रुधाद्यर्थानामिति** ॥ 'क्रुध क्रोधे, द्रुह द्रोहे' श्यन्विकरणौ । 'ईर्ष्य ईर्ष्यायां' शब्विकरणः । 'असूञ् उपतापे' कण्ड्वादिः । एषामर्था एवार्था येषामिति विग्रहः । **हरये क्रुध्यतीति** ॥ रावणादिरिति शेषः । हरिविषयकं कोपं करोतीत्यर्थः । घातेच्छासमनियतश्चित्तवृत्तिविशेषः कोपः । अकर्मकत्वात् षष्ठी प्राप्ता । **द्रुह्यतीति** ॥ कोपात् हरिविषयकमपकारं करोतीत्यर्थः । अकर्मकत्वात् षष्ठी प्राप्ता । अपकारो दुःखजनिका क्रिया । धात्वर्थोपसङ्ग्रहादकर्मकः । **ईर्ष्यतीति** ॥ ईर्ष्या असहनम् । हरिं कोपान्न सहत इत्यर्थः । कर्मणि द्वितीया प्राप्ता । **असूयति वेति** ॥ असूया गुणेषु दोषारोपः । यथाविहितकर्माचारे दम्भादिकृतकत्वारोपणम् । इह कोपात् हरिं दुर्गुणं मन्यत-

मैनामन्यो द्राक्षीदिति। क्रोधोऽमर्षः। द्रोहोऽपकारः। ईर्ष्या अक्षमा। असूया गुणेषु दोषाविष्करणम्। द्रोहादयोऽपि कोपप्रभवा एव गृह्यन्ते। अतो विशेषणं सामान्येन 'यं प्रति कोपः' इति।

## ५७६। क्रुधद्रुहोरुपसृष्टयोः कर्म। (१-४-३८)

सोपसर्गयोरनयोर्योगे यं प्रति कोपस्तत्कारकं कर्मसंज्ञं स्यात्। क्रूरमभिक्रुध्यति—अभिद्रुह्यति।

## ५७७। राधीक्ष्योर्यस्य विप्रश्नः। (१-४-३९)

एतयोः कारकं सम्प्रदानं स्यात्। यदीयो विविधः प्रश्नः क्रियते। कृष्णाय राध्यति—ईक्षते वा। पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः।

## ५७८। प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता। (१-४-४०)

आभ्यां परस्य शृणोतेर्योगे पूर्वस्य प्रवर्तनारूपस्य व्यापारस्य कर्ता सम्प्र-

---

इत्यर्थः। **मैनामिति**॥ एनां भार्यामन्यो न पश्येत् इत्येतदर्थं भार्यागुणेषु दोषारोपणं करोतीत्यर्थः। नात्र भार्यां प्रति कोपः, किन्तु परेण दृश्यमानां तां न सहत इत्येव विवक्षितमिति। एवञ्च क्रोधद्रोहेर्ष्यासूयानां कोपमूलकत्व एवेदमिति भाष्ये स्थितम्। तथाच कुप्यति कस्मै चिदित्याद्यसाध्वेव। कोपस्य कोपमूलकत्वाभावात् क्रुधार्थकत्वाभावाच्च। प्ररूढकोप एव हि क्रोधः, 'नह्यकुपितः क्रुध्यति' इति भाष्यात्। **क्रुधद्रुहोः**॥ उपसृष्टयोरित्येतत् व्याचष्टे। **सोपसर्गयोरिति**॥ पूर्वसूत्रापवादोऽयम्। हरेः क्रोधद्रोहोद्देश्यत्वाभावात् 'क्रियया यमभिप्रैति' इति सम्प्रदानत्वस्य न प्रसक्तिः। नापि तादर्थ्यचतुर्थ्याः। क्रुधद्रुहोरकर्मकत्वात् न हरेः कर्मत्वम्। अतः शेषषष्ठ्यां प्राप्तायां वाचनिकं कर्मत्वम्। **राधीक्ष्योः**॥ **यदीय इति**॥ यद्विषयक इत्यर्थः। विप्रश्न इत्येतद्व्याचष्टे। **विविधः प्रश्न इति**॥ **कृष्णाय राध्यति ईक्षते वा, पृष्टो गर्ग इति**॥ गर्गो नाम ज्योतिश्शास्त्रवित् ऋषिविशेषः, सः कृष्णाय राध्यति ईक्षते वेत्यन्वयः। 'राध संसिद्धौ, ईक्ष दर्शने'। इह तु प्रश्नविषयशुभाशुभपर्यालोचनमर्थः। यस्य विप्रश्न इति लिङ्गात्। तदाह। **शुभाशुभं पर्यालोचयतीत्यर्थः इति**॥ अत्र शुभाशुभस्य च प्रश्नविषयस्य धात्वर्थोपसङ्ग्रहादकर्मकावेतौ। अत एव राध्यतीति श्यन्नुपपद्यते। अन्यथा 'राधोऽकर्मात्' इति नियमात् श्यन् न स्यात्। एवञ्च किं कृष्णस्य शुभमशुभं वेति पृष्टो गर्गः कृष्णविषयकं शुभाशुभं पर्यालोचयतीत्यर्थः। कृष्णस्य सम्प्रदानत्वं षष्ठ्यपवादः। **प्रत्याङ्भ्याम्**॥ प्रत्याङ्भ्यामिति दिग्योगे पञ्चमी। परस्येत्यध्याहार्यम्। श्रुव इत्यस्य विशेषणम्। 'श्रु श्रवणे'। इह तु प्रेरणापूर्वकाभ्युपगमे वर्तते। पूर्वशब्दः प्रेरणात्मकव्यापारं परामृशति। तदाह। **आभ्यामित्यादिना**॥ पूर्वस्येत्यस्य व्याख्यानम्।

दानं स्यात् । विप्राय गां प्रतिशृणोति—आशृणोति वा । विप्रेण मह्यं देहीति प्रवर्तितस्तत्प्रतिजानीते इत्यर्थः ।

## ५७९ । अनुप्रतिगृणश्च । (१-४-४१)

आभ्यां गृणातेः कारकं पूर्वव्यापारस्य कर्तृभूतमुक्तसंज्ञं स्यात् । होत्रेऽनुगृणाति—प्रतिगृणाति वा । होता प्रथमं शंसति, तमध्वर्युः प्रोत्साहयतीत्यर्थः ।

## ५८० । परिक्रयणे सम्प्रदानमन्यतरस्याम् । (१-४-४४)

नियतकालं भृत्या स्वीकरणं परिक्रयणम्, तस्मिन्साधकतमं कारकं सम्प्रदानसंज्ञं वा स्यात् । शतेन—शताय वा परिक्रीतः । 'तादर्थ्ये चतुर्थी वाच्या' (वा १४५८) । मुक्तये हरिं भजति । 'क्लृपि सम्पद्यमाने च'

---

**प्रवर्तनारूपस्येति** ॥ प्रेरणारूपस्येत्यर्थः । प्रत्याङ्भ्यामित्यनेन समुदिताभ्यां परस्येति नार्थो विवक्षितः । किन्तु प्रत्येकमेव तयोर्निमित्तत्वम्, अन्यथा 'अभिनिविशश्च' इतिवत् 'प्रत्याङ्श्रुवः' इत्येव ब्रूयादित्यभिप्रेत्य उदाहरति । **विप्राय गां प्रतिशृणोति आशृणोति वेति** ॥ अत्र प्रतिपूर्वकः आङ्पूर्वकश्च श्रुधातुः प्रेरणापूर्वकाभ्युपगमे वर्तते, ततश्च प्रवर्तितः प्रतिजानीते इति लभ्यते । केन प्रवर्तित इत्याकाङ्क्षायां विप्रः कर्तृत्वेनान्वेति । तत्र विप्रस्य प्रेरणाकर्तृत्वात् सम्प्रदानत्वं कर्तृतृतीयापवाद इत्यभिप्रेत्य आह । **विप्रेणेति** ॥ मह्यं गवादिद्रव्यं देहीति विप्रेण पृष्टस्सन् देवदत्तः तुभ्यं ददामीत्यभ्युपगच्छतीति योजना । **अनुप्रतिगृणश्च** ॥ पूर्वस्य कर्तेत्यनुवर्तते । 'गॄ शब्दे' इत्यस्य श्नान्तस्य अनुकरणशब्दात् गृण इति षष्ठी । अत्र गृधातुः शंसितृकर्मके शंसनविषयकप्रोत्साहने वर्तते । तत्र पूर्वव्यापारस्य शंसनस्य कर्ता सम्प्रदानमित्यर्थः । तदाह । **आभ्यामिति** ॥ पूर्वसूत्रे प्रत्याङ्भ्यामिति द्विवचननिर्देशबलात् प्रत्येकमेव धातुसम्बन्धावधारणात् तत्साहचर्यात् इहापि प्रत्येकमेव धातुसम्बन्ध इत्यभिप्रेत्य उदाहरति । **होत्रे अनुगृणाति प्रतिगृणाति वेति** ॥ **होता प्रथममिति** । शंसितारं होतारं उत्तरोत्तरशंसनविषये प्रोत्साहयतीति यावत् । "ओऽथ मोदै व" इति प्रतिगरमन्त्रः । ओ इति सम्बोधने, मोदै इति लोडुत्तमपुरुषैकवचनम् । व इत्येवकारार्थे, हे होतः अथ त्वदीयशंसनानन्तरं तुष्याम्येवेति तदर्थः । प्रोत्साहने होतुः कर्मत्वं प्राप्तम्, पूर्वव्यापारं शंसनं प्रति कर्तृत्वाद्धोतुस्सम्प्रदानत्वम् । **परिक्रयणे** ॥ **नियतकालमिति** ॥ तुभ्यमेतावद्वेतनं दीयते, तत् गृह्णन् एतावन्तं कालं त्वं मम कर्मकरो भव इत्येवं परिमितकालं भृत्या स्वीकरणं परिक्रयणमित्यर्थः । साधकतममित्यनुवर्तते । तदाह । **तस्मिन् साधकतममिति** ॥ सम्प्रदानत्वाभावे करणसंज्ञा । **शतेनेति** ॥ सुवर्णादियत्किञ्चिद्द्रव्यशतेनेत्यर्थः । **तादर्थ्ये चतुर्थी वाच्येति** ॥ 'चतुर्थी सम्प्रदाने' इति सूत्रभाष्ये पठितमेतत् । तस्मै इदं तदर्थम् । अर्थेन नित्यसमासः । तदर्थस्य भावः तादर्थ्यम् । ब्राह्मणादित्वात् ष्यञ् । तेन च उपकार्योपकारकभावसम्बन्धो विवक्षितः । तत्र उपकार्यादेव चतुर्थी । भाष्ये यूपाय

(वा १४५९)। भक्तिर्ज्ञानाय कल्पते--सम्पद्यते--जायते इत्यादि। 'उत्पातेन ज्ञापिते च' (वा १४६०)। वाताय कपिला विद्युत्। 'हितयोगे च' (वा १४६१)। ब्राह्मणाय हितम्।

## ५८१। क्रियार्थोपपदस्य कर्मणि स्थानिनः। (२-३-१४)

क्रियार्था क्रिया उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी स्यात्। फलेभ्यो याति। फलान्याहर्तुं यातीत्यर्थः। नमस्कुर्मो नृसिंहाय। नृसिंहमनुकूलयितुमित्यर्थः। एवं 'स्वयम्भुवे नमस्कृत्य' इत्यादावपि।

---

दारु, कुण्डलाय हिरण्यम्, इत्युदाहृतत्वादित्यभिप्रेत्योदाहरति। **मुक्तये इति** ॥ मुक्त्यर्थमित्यर्थः। उपकार्यत्वञ्च बहुविधं जन्यत्वादि। यथा मुक्तये हरिं भजतीति मुक्तिर्जन्येति गम्यते, प्राप्यत्वं वा। ब्राह्मणाय दधीति ब्राह्मणस्योपकार्यत्वं गम्यते। इत्यादि। नचैवमपि अनेनैव सिद्धे 'चतुर्थी सम्प्रदाने' इति सूत्रे सम्प्रदानसंज्ञाविधानञ्च व्यर्थमिति वाच्यम्। 'हरये रोचते भक्तिः' इत्यादौ 'रुच्यर्थानां प्रीयमाणः' इत्याद्यर्थं तदावश्यकत्वात्, इति भाष्ये स्पष्टम्। **क्लृपि सम्पद्यमाने चेति** ॥ क्लृपीति सप्तमी, सम्पत्तिः विकारात्मना उत्पत्तिः, परिणाम इति यावत्। क्लृपिधातौ प्रयुज्यमाने सति सम्पद्यमानेऽर्थे वर्तमानात् चतुर्थी वाच्येत्यर्थः। **भक्तिरिति** ॥ ज्ञानात्मना परिणमते इत्यर्थः। क्लृपीत्यर्थग्रहणमित्यभिप्रेत्योदाहरति। **सम्पद्यते, जायते इत्यादीति** ॥ आदिना परिणमते इत्यादिसङ्ग्रहः। परिणामत्वप्रकारकबोधार्थमिदं वचनम्। अन्यथा तादर्थ्यचतुर्थ्यैव सिद्धमित्याहुः। **उत्पातेन ज्ञापिते चेति** ॥ अशुभसूचकः आकस्मिकः भूतविकारः उत्पातः, तेन सूचितेऽर्थे विद्यमानात् चतुर्थी वाच्येत्यर्थः। **वातायेति** ॥ महावातस्य सूचिकेत्यर्थः। **हितयोगे चेति** ॥ चतुर्थी वाच्येति शेषः। **ब्राह्मणाय हितमिति** ॥ ब्राह्मणस्य सुखकृदित्यर्थः। याजनादिरिति शेषः। **क्रियार्थ** ॥ क्रिया अर्थः प्रयोजनं यस्यास्सा क्रियार्था। क्रियेति विशेष्यमध्याहार्यम्, क्रियाफलकक्रियावाचकमिति यावत्। क्रियार्था क्रिया उपपदं यस्येति विग्रहः। तुमुनो विशेषणमेतत्। उपोच्चारितं पदम् उपपदम्। स्थानिन इत्यपि तद्विशेषणम्। स्थानं प्रसक्तिरस्यास्तीति स्थानी, तस्येति विग्रहः। अप्रयुज्यमानस्येति यावत्। तादृशस्य तुमुन्नन्तस्य कर्मणि चतुर्थीति फलितम्। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति तुमुन्विधिमहिम्ना क्रियाफलकमुपपदं क्रियावाच्येव लभ्यते। तदाह। **क्रियार्था क्रियेति** ॥ स्थानिन इत्यस्य व्याख्यानम्। **अप्रयुज्यमानस्येति** ॥ फलेभ्यो यातीत्यत्र कस्य तुमुन्नन्तस्य प्रसक्तिरित्यत आह। **फलान्याहर्तुमिति** ॥ इह फलाहरणक्रियार्था यानक्रिया, तद्वाचके उपपदे आहर्तुमित्यध्याहारलभ्यतुमुन्नन्तार्थाहरणक्रियां प्रति फलानां कर्मत्वात् सम्प्रदानत्वम्। द्वितीयापवादः। नच तादर्थ्यचतुर्थ्या गतार्थता शङ्क्या। नहि यानक्रिया फलार्था, किन्तु फलकर्मकाहरणक्रियार्थैव, अतो न फलेभ्यस्तादर्थ्यचतुर्थीप्रसक्तिः। एवञ्च फलकर्मकाहरणक्रियार्था यानक्रियेति बोधः। उदाहरणान्तरमाह। **नमस्कुर्म इति** ॥ तुमुन्नन्तार्थाध्याहारन्दर्शयति।

## ५८२ । तुमर्थाच्च भाववचनात् । (२-३-१५)

'भाववचनाश्च' (सू ३१८०) इति सूत्रेण यो विहितस्तदन्ताच्चतुर्थी स्यात् । यागाय याति । यष्टुं यातीत्यर्थः ।

## ५८३ । नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च । (२-३-१६)

एभिर्योगे चतुर्थी स्यात् । हरये नमः । 'उपपदविभक्तेः कारकविभक्ति-

---

**नृसिंहमनुकूलयितुमिति** ॥ नचात्र 'नमःस्वस्ति' इत्येव चतुर्थी सिद्धेति वाच्यम् । 'उपपदविभक्तेः' कारकविभक्तिर्बलीयसी' इति द्वितीयापत्तेः । एतत्सूचनार्थमेवेदमुदाहरणान्तरं दर्शितम् । **तुमर्थाच्च** ॥ 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति सूत्रम् । क्रियार्थायां क्रियायामुपपदभूतायां भविष्यति काले तुमुन्ण्वुलौ स्तः । भोक्तुं व्रजति, भोजको व्रजति, भविष्यद्भुजिक्रियार्थो व्रजतिरत्रोपपदम्, अस्य तुमुनः अर्थ इवार्थो यस्य तस्मादिति विग्रहः । भावः, क्रिया उच्यते अनेनेति वचनः, भावस्य वचनः भाववचनः, तस्मादिति विग्रहः । क्रियावाचिन इति यावत् । प्रत्ययादिति शेषः । तत्र 'अव्ययकृतो भावे' इति तुमुनो भाव एव विहितत्वेन तुमर्थकस्य प्रत्ययस्य भाववचनत्वे सिद्धे पुनर्भाववचनग्रहणं सूत्रविशेषपरिग्रहणार्थमित्याह । **भाववचनाश्चेति** ॥ भावे इत्यधिकृत्य ये घञादिप्रत्यया विहिताः ते क्रियार्थक्रियायामुपपदभूतायां भविष्यति स्युरिति तदर्थः । यागाय यातीत्याद्युदाहरणम् । एवञ्च क्रियार्थत्वलाभार्थं तुमर्थादिति विशेषणम् । अत्र तादर्थ्यस्य तुमुनेव, घञा द्योतितत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायेन तादर्थ्यचतुर्थ्या अप्राप्तौ प्रथमायाः प्राप्ताविदं वचनम् । तुमर्थादिति किम् । पाकः त्यागः इत्यादौ 'घञो भावे' इत्यधिकारस्थत्वेऽपि न चतुर्थी । क्रियार्थक्रियोपपदत्वाभावेन तुमर्थकत्वाभावात् । भाववचनादिति किम् । पाचको व्रजति । पक्तुं व्रजतीत्यर्थः । 'तुमुन्ण्वुलौ' इति ण्वुल् । तस्य तुमर्थकत्वेऽपि 'भावे' इत्यधिकारे विध्यभावान्न चतुर्थी । तादर्थ्यस्य ण्वुलैवोक्तत्वान्न तादर्थ्यचतुर्थी, किन्तु प्रथमैव । **नमःस्वस्ति** ॥ युज्यत इति योगः, कर्मणि घञ् । नमस् इत्यादिभिर्युक्तादित्यर्थः । फलितमाह । **एभिर्योगे इति** ॥ न च तादर्थ्यचतुर्थ्या गतार्थत्वं शङ्क्यम् । तादर्थ्यस्य शेषत्वविवक्षायां षष्ठीनिवारणार्थत्वात् । तादर्थ्यं हि उपकार्योपकारकभावः, तस्य यदा सम्बन्धत्वेन भानन्तदा षष्ठी । यथा 'गुरोरिदं गुर्वर्थम्' इति भाष्ये स्पष्टम् । एवञ्च नमःस्वस्त्यादियोगे तादर्थ्यस्य शेषत्वविवक्षायामपि चतुर्थ्येवेत्येतदर्थमिदं सूत्रम् । ननु नमस्करोति देवानित्यत्रापि चतुर्थी स्यादित्यत आह । **उपपदविभक्तेरिति** ॥ पदान्तरयोगनिमित्तिका विभक्तिः उपपदविभक्तिः, तदपेक्षया कारकविभक्तिर्बलीयसीत्यर्थः । 'अन्तरान्तरेण' इति सूत्रे भाष्ये पठितमिदं वचनम्, तच्च न्यायसिद्धम् । क्रियाकारकयोर्हि सम्बन्धः अन्तरङ्गः । उपपदार्थेन तु यत्किञ्चित्क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्ता विभक्तिर्बहिरङ्गेति कैयटः । अन्ये तु उपपदविभक्त्या सम्बन्धसामान्यमवगम्यते, विशेषावगमस्तु प्रकरणादिपर्यालोचनया लभ्यः । कारकविभक्त्या तु कर्मत्वादिसम्बन्धविशेषः,

बलीयसी' (प १०३)। नमस्करोति देवान्। प्रजाभ्यः स्वस्ति। अग्नये स्वाहा। पितृभ्यः स्वधा। अलमिति पर्याप्त्यर्थग्रहणम्। तेन दैत्येभ्यो हरिरलं–प्रभुः–**समर्थः**–शक्त इत्यादि। प्रभ्वादियोगे षष्ठ्यपि साधुः। 'तस्मै प्रभवति–' (सू १७६५) 'स एषां ग्रामणीः' (सू १८७८) इति निर्देशात्। तेन 'प्रभुर्बुभूषुर्भुवनत्रयस्य' इति सिद्धम्। वषडिन्द्राय। चकारः पुनर्विधानार्थः। तेनाशीर्विवक्षायां परामपि 'चतुर्थी चाशिषि–' (सू ६३१) इति षष्ठीं बाधित्वा चतुर्थ्येव भवति। स्वस्ति गोभ्यो भूयात्।

## ५८४। मन्यकर्मण्यनादरे विभाषाऽप्राणिषु। (२-३-१७)

प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात्तिरस्कारे। न त्वां तृणं मन्ये तृणाय वा। श्यना निर्देशात्तानादिकयोगे न। न त्वां तृणं मन्वे।

---

झटित्येवावगम्यत इति सा बलीयसीत्याहुः। **नमस्करोति देवानिति**॥ करशिरस्संयोगादिना तोषयतीत्यर्थः। करशिरस्संयोगादिमात्रार्थत्वे अकर्मकत्वापातात्। **प्रजाभ्यः स्वस्तीति**॥ प्रजासम्बन्धि कुशलमित्यर्थः। **अग्नये स्वाहेति**॥ अग्न्युद्देश्यकं द्रव्यदानमित्यर्थः। **पितृभ्यः स्वधेति**॥ पित्रुद्देश्यकं द्रव्यदानमित्यर्थः। 'स्वं रूपं शब्दस्य' इति अलंशब्दस्यैव ग्रहणे कुमारीणामलङ्कारः इत्यत्रातिव्याप्तिः। किञ्च दैत्येभ्यो हरिरलमित्यत्रैव स्यात्, दैत्येभ्यो हरिः प्रभुरित्यादौ न स्यादित्यत आह। **अलमितीति**॥ वार्तिकमेतत्। अलमित्यनेन पर्याप्त्यर्थकशब्दानां ग्रहणमित्यर्थः। **तेनेति**॥ पर्याप्त्यर्थग्रहणेनेत्यर्थः। **इत्यादीति**॥ आदिना कुमारीणामलङ्कार इत्यत्रातिव्याप्तिनिराससङ्ग्रहः। ननु 'प्रभुर्बुभूषुर्भुवनत्रयस्य' इत्यादौ कथं षष्ठीत्यत आह। **प्रभ्वादियोगे षष्ठ्यपि साधुरिति**॥ कुत इत्यत आह। **स एषां ग्रामणीरिति निर्देशादिति**॥ नन्वेवं सति दैत्येभ्यः प्रभुरिति चतुर्थी न स्यात्। अलंशब्दस्तु पर्याप्तीतरार्थक एव भविष्यतीत्यत आह। **तस्मै प्रभवतीति**॥ **वषडिन्द्रायेति**॥ इन्द्रोद्देश्यकं हविर्दानमित्यर्थः। ननु स्वस्ति गोभ्यो भूयात् इत्याशीर्वाक्ये चतुर्थ्येवेष्यते। तत्र 'चतुर्थीचाशिष्यायुष्य' इत्यादिना परत्वात् पक्षे षष्ठीप्रसङ्ग इत्यत आह। **चकारः पुनर्विधानार्थः इति**॥ **तेनेति**॥ पुनर्विधानसामर्थ्येनेत्यर्थः। **मन्यकर्मणि**॥ अप्राणिष्विति च्छेदः। 'मन ज्ञाने' दिवादिः श्यन्विकरणः, 'मनु अवबोधने' तनादिरुविकरणः। तत्र मन्येति श्यना निर्देशात् दैवादिकस्य ग्रहणमित्याह। **मन्यतेरिति**॥ **कर्मणीति**॥ अतो द्वितीयां बाधित्वा पक्षे चतुर्थीति सूचितम्। **तिरस्कारे इति**॥ अनादर इत्यस्य व्याख्यानमेतत्। "अनादरः परिभवः परीभावस्तिरस्क्रिया" इत्यमरः। **न त्वां तृणमिति**॥ हे देवदत्त त्वां तृणत्वेनापि न मन्ये इत्यर्थः। नञुपादानादयमर्थो लभ्यते। तृणादप्यधमत्वप्रतीतेस्तिरस्कारातिशयः फलितः। तृणं त्वां मन्ये तृणाय वेत्युक्तौ तु तृणसाम्यमेव प्रतीयेत। न तु ततोऽप्यपकृष्टत्वम्। एतदेवाभिप्रेत्य भाष्येऽपि नञुपात्तः। न च मन्यकर्मत्वाविशेषात् त्वामिति युष्मच्छब्दादपि चतुर्थी

'अप्राणिष्वित्यपनीय नौकाकान्नशुकसृगालवर्जेष्विति वाच्यम्' (वा १४६४)। तेन 'न त्वां नावं मन्ये' इत्यत्राऽप्राणित्वेऽपि चतुर्थी न। 'न त्वां शुने मन्ये' इत्यत्र प्राणित्वेऽपि भवत्येव।

## ५८५। गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि। (२-३-१२)

अध्वभिन्ने गत्यर्थानां कर्मण्येते स्तश्चेष्टायाम्। ग्रामं ग्रामाय वा गच्छति। 'चेष्टायाम्' किम्। मनसा हरिं व्रजति। 'अनध्वनि' इति किम्। पन्थानं गच्छति। गन्त्राऽधिष्ठितेऽध्वन्येवायं निषेधः। यदा तूत्पथात्पन्था एवाक्रमितुमिष्यते तदा चतुर्थी भवत्येव। उत्पथेन पथे गच्छति॥

इति चतुर्थी विभक्तिः।

---

शङ्कया। अनादरद्योतके कर्मणि इत्यर्थस्य विवक्षितत्वात्। तृणमेव ह्यत्रानादरद्योतकम्, न तु युष्मदर्थः। **श्यनेति**॥ तानादिकमनुधातुकर्मणि द्वितीयैव, नतु पक्षे चतुर्थीति भावः। **न त्वां तृणं मन्वे इति**॥ मनुधातोरुविकरणस्य लडुत्तमपुरुषैकवचनम्। ननु 'न त्वान्नावमन्नं मन्ये' इत्यत्रापि चतुर्थीविकल्पः स्यादित्यतिव्याप्तिः। न त्वां शुने मन्ये इत्यादौ तु प्राणित्वात् चतुर्थीविकल्पो न स्यादित्यव्याप्तिः। कर्मणः प्राणित्वादित्यत आह। **अप्राणिष्वित्यपनीयेति॥ न त्वान्नावम्मन्ये इति**॥ जीर्णान्नावं प्रति वाक्यमेतत्। न त्वामन्नम्मन्ये इत्यप्युदाहार्यम्। कुत्सितमन्नं प्रति वाक्यमेतत्। उभयत्राप्यप्राणित्वेऽपि न चतुर्थीविकल्पः, किन्तु द्वितीयैवेति भावः। **न त्वां शुने मन्ये इति**॥ हे देवदत्त त्वां श्वत्वेनापि न मन्ये इत्यर्थः। न त्वां काकम्मन्ये, न त्वां शुकम्मन्ये, न त्वां सृगालम्मन्ये, इत्यप्युदाहार्यम्। एषु प्राणित्वेऽपि न चतुर्थीविकल्प इति भावः। **गत्यर्थ**॥ शारीरपरिस्पन्दश्चेष्टा। **मनसेति**॥ अत्र शारीरचेष्टायाः अभावान्न द्वितीयाचतुर्थ्यौ, किन्तु द्वितीयैवेति भावः। 'आस्थितप्रतिषेधोऽयं वक्तव्यः' इति वार्तिकमर्थतस्संगृह्णाति। **गन्त्राऽधिष्ठिते इति**॥ गन्त्राक्रान्ते अध्वन्येव अनध्वनीत्ययन्निषेध इत्यर्थः। यथा पन्थानं गच्छतीति। पन्थानं प्राप्नोतीत्यर्थः। अत्र पथः प्राप्त्याश्रयत्वेन गन्त्राधिष्ठितत्वान्निषेधः। अस्य वार्तिकस्य प्रयोजनमाह। **यदा त्विति**॥ **उत्पथात्त्विति**॥ अमार्गादित्यर्थः। ल्यब्लोपे पञ्चमी। उज्जयिनीं प्राप्तुं प्रस्थितः मोहात्तन्मार्गात् प्रच्युतः मार्गान्तरं प्रविष्टः, तं परित्यज्य पुनरुज्जयिनीमार्गः आक्रमितुमिष्यते, तदा अनध्वनीति निषेधाभावाच्चतुर्थ्यपि भवत्येवेत्यर्थः। तादृशं लक्ष्यन्दर्शयति। **उत्पथेन पथे गच्छतीति**॥ उत्पथेनेत्यनन्तरं गन्तुमशक्त इति शेषः। उत्पथेन उज्जयिनीं प्राप्तुमशक्तः उत्पथं परित्यज्य उज्जयिनीमार्गं प्रवेष्टुं तदीयम्मार्गमनुसरतीत्यर्थः। अत्र उज्जयिनीमार्गस्य गन्त्राधिष्ठितत्वाभावात् अनध्वनीति निषेधो न भवति, अतश्चतुर्थी भवति, पक्षे द्वितीया चेति भावः॥

इति चतुर्थी विभक्तिः।

## अथ पञ्चमी विभक्तिः।

### ५८६। ध्रुवमपायेऽपादानम्। (१-४-२४)

अपायो विश्लेषः, तस्मिन्साध्ये ध्रुवमवधिभूतं कारकमपादानं स्यात्।

### ५८७। अपादाने पञ्चमी। (२-३-२८)

ग्रामादायाति। धावतोऽश्वात्पतति। 'कारकम्' किम्। वृक्षस्य पर्णं पतति। 'जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्' (वा १०७९)। पापाज्जुगुप्सते, विरमति। धर्मात्प्रमाद्यति।

### ५८८। भीत्रार्थानां भयहेतुः। (१-४-२५)

भयार्थानां त्राणार्थानां च प्रयोगे भयहेतुरपादानं स्यात्। चोराद्बिभेति। चोरात्त्रायते। 'भयहेतुः' किम्। अरण्ये बिभेति, त्रायते वा।

### ५८९। पराजेरसोढः। (१-४-२६)

---

अथ पञ्चमी विभक्तिः—**ध्रुवमपाये**॥ अपायपदं व्याचष्टे। **अपायो विश्लेष इति**॥ वियोग इत्यर्थः। ध्रुवपदं व्याचष्टे। **अवधिभूतमिति**॥ द्वयोस्संयुक्तयोरन्यतरस्य चलनाद्विश्लेष इति स्थितिः। तत्र तादृशचलनानाश्रयभूतं ध्रुवम्। तच्चेहार्थादवधिभूतं विवक्षितमिति भावः। **अपादाने पञ्चमी**॥ स्पष्टत्वान्न व्याख्यातम्। **ग्रामादायातीति**॥ आगच्छतीत्यर्थः। कस्मादित्याकाङ्क्षाविषयत्वात् ग्रामोऽवधिरिति अपादानत्वात् पञ्चमी। माथुराः पाटलीपुत्रेभ्यः आढ्यतराः' इत्यादौ बुद्धिकल्पितविश्लेषावधित्वमादाय अपादानत्वमिति भाष्ये स्पष्टम्। ननु विश्लेषानुकूलचलनानाश्रयभूतं यत् तदेव ध्रुवमिति व्याख्यायताम्। किमवधित्वविवक्षयेत्यत आह। **धावतोऽश्वात् पततीति**॥ अश्वस्य चलनाश्रयत्वेऽपि पतनक्रियां प्रति कस्मादित्याकाङ्क्षाविषयत्वलक्षणमवधित्वं न विरुद्धमिति भावः। **जुगुप्सेति**॥ जुगुप्साद्यर्थकधातुभिर्योगे जुगुप्सादिविषयस्यापादानत्वमित्यर्थः। **पापाज्जुगुप्सते इति**॥ पापविषये कुत्सितत्वबुद्ध्या न रमते इत्यर्थः। **विरमतीति**॥ पापादित्यनुषज्यते। पापविषये न प्रवर्तत इत्यर्थः। **धर्मात् प्रमाद्यतीति**॥ धर्मविषये मुह्यतीत्यर्थः। वास्तवसंयोगविश्लेषयोरभावात् वचनमिदम्। यदा तु जुगुप्सते इत्यादेर्निवर्तत इत्यर्थः आश्रीयते, तदा बुद्धिकृतविश्लेषावधित्वमादाय अपादानत्वादेव सिद्धमिति वार्तिकमिदं भाष्ये प्रत्याख्यातम्। **भीत्रा**॥ **चोराद्बिभेतीति**॥ चोरेण हेतुनेत्यर्थः। हेतुतृतीया प्राप्ता। **चोरात्त्रायते इति**॥ चोरेण हेतुना आत्मानं तत्कृतवधबन्धनादिनिवृत्त्यै रक्षतीत्यर्थः। यदा तु चोरात् बिभेति भीत्या निवर्तते, चोरात्त्रायते आत्मानं त्रातुं निवर्तयतीत्यर्थः आश्रीयते, तदा बुद्धिकल्पितविश्लेषावधित्वमादायापादानत्वं सिद्धमिति इदं सूत्रं भाष्ये प्रत्याख्यातम्। **पराजेरसोढः**॥ सहधातोः क्तप्रत्यये

पराजेः प्रयोगेऽसह्योऽर्थोऽपादानं स्यात् । अध्ययनात्पराजयते । ग्लायतीत्यर्थः । 'असोढः' किम् । शत्रून्पराजयते । अभिभवतीत्यर्थः ।

## ५९० । वारणार्थानामीप्सितः । (१-४-२७)

प्रवृत्तिविघातो वारणम्, वारणार्थानां धातूनां प्रयोगे ईप्सितोऽर्थोऽपादानं स्यात् । यवेभ्यो गां वारयति । 'ईप्सितः' किम् । यवेभ्यो गां वारयति क्षेत्रे ।

---

'सहिवहोरोदवर्णस्य' इत्योत्त्वे यत्वढत्वष्टुत्वढलोपेषु कृतेषु सोढ इति रूपम् । तत्र क्तार्थो भूतकालो न विवक्षितः । तदाह । **असह्योऽर्थ इति** ॥ सोढुमशक्य इत्यर्थः । हेतुतृतीयापवादोऽयम् । **ग्लायतीत्यर्थ इति** ॥ असहनादिति शेषः । यदा तु असहनान्निवर्तत इत्यर्थ आश्रीयते, तदा ध्रुवमित्यपादानत्वादेव सिद्धमिति भाष्यम् । **अभिभवतीति** ॥ तिरस्करोतीत्यर्थः । अत्र शत्रूणामभिभवनीयतया असह्यत्वाभावान्नापादानता । **वारणार्थानामीप्सितः** ॥ प्रवृत्तिविमुखीकरणं वारणम् । **यवेभ्य इति** ॥ यवेषु प्रवर्तितुकामां गां प्रवृत्तिविमुखीकरोतीत्यर्थः । संयोगपूर्वकविश्लेषाभावात् 'ध्रुवमपाये' इत्यप्राप्ताविदं वचनम् । तत्र यवानां स्वकीयतया संरक्षणीयत्वेन ईप्सितत्वादपादानत्वं, नतु गोः, तस्याः परकीयत्वेनानीप्सितत्वात् वारणीयतया ईप्सितत्वव्याघाताच्च । तथाच 'तथायुक्तञ्च' इति गोः कर्मत्वात् द्वितीया । यदा तु यवाः परकीयाः गौस्तु स्वकीया तदा वारणमसम्भावितमेव । वस्तुतस्तु यवानां परकीयत्वेऽपि तद्विनाशादधर्मस्स्यात् । यवस्वामी गामपहृत्य बध्नीयात् । गोस्वामिनञ्च यवस्वामी दण्डयेत् । अतो यवानां रक्षितुमिष्टत्वात् ईप्सितत्वादपादानत्वमस्त्येव । गोस्तु स्वकीयत्वेऽपि बाधकनिवृत्त्यै वारयितुमिष्टतमत्वात् कर्मत्वम् । नच गोरीप्सिततमत्वेऽपि ईप्सितत्वस्यापि सत्त्वादपादानत्वं किन्न स्यादिति वाच्यम् । ईप्सिततमत्वे 'वारणार्थानाम्' इत्यपादानत्वम् बाधित्वा 'कर्तुरीप्सिततमम्' इति कर्मत्वस्यैव परत्वात् प्राप्तेः । नच 'वारणार्थानामीप्सितः' इत्यपादानत्वस्य 'कर्तुरीप्सिततमम्' इति कर्मत्वापवादत्वं शङ्क्यम् । 'कर्तुरीप्सिततमम्' इति कर्मत्वं हि ईप्सिततममात्रविषयम् । वारणार्थानामित्यपादानत्वन्तु ईप्सितविषयम्, तस्य प्रकृते ईप्सितेषु यवेषु परकीयेषु सावकाशत्वात् न 'कर्तुरीप्सिततमम्' इति कर्मत्वापवादत्वम् । अतः परत्वात् गोः स्वकीयायाः परकीययवापेक्षया ईप्सिततमत्वात् कर्मत्वमेव । नच अग्नेर्माणवकं वारयतीत्यत्र अग्नेरीप्सितत्वाभावात् कथमपादानत्वमिति वाच्यम् । इष्टत्वभ्रमादग्नौ विषये स्पर्शनफलकप्रवृत्त्यभिमुखं माणवकं प्रवृत्तिविमुखीकरोतीति हि तदर्थः । तत्राग्निस्पर्शे माणवकस्य दाहप्रसङ्गात् तद्विषयप्रवृत्तिविमुखीकरणात्मकवारणक्रियया आप्तुमिष्टतमत्वेन वारयितुमीप्सिततमत्वात् माणवकस्य कर्मत्वम् । अग्नेस्तु वारणक्रियेप्सिततममाणवकीयस्पर्शक्रियया आप्तुमिष्टतमत्वेऽपि वारयितुरीप्सितत्वात् अपादानत्वम् । एतेन कर्तुर्व्यापारजन्यफलाश्रयः कर्मेत्येवास्तु, 'कर्तुरीप्सिततमं कर्म, तथायुक्तञ्चानीप्सितम्' इति किमीप्सिततमानीप्सि-

## ५९१। अन्तर्धौ येनादर्शनमिच्छति। (१-४-२८)

व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति तदपादानं स्यात्। मातुर्निलीयते कृष्णः। 'अन्तर्धौ' किम्, चौरान्न दिदृक्षते। 'इच्छति' ग्रहणं किम्। अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात्। देवदत्ताद्यज्ञदत्तो निलीयते।

## ५९२। आख्यातोपयोगे। (१-४-२९)

नियमपूर्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात्। उपाध्यायादधीते। 'उपयोगे' किम्। नटस्य गाथां शृणोति।

---

तयोः पृथग्ग्रहणेन। एतावतैव हरिं भजति, ग्रामं गच्छन् तृणं स्पृशति, विषं भुङ्क्ते, इत्यादिसर्वलक्ष्यसङ्ग्रहादिति निरस्तम्। कर्तृव्यापारजन्यफलाश्रयः कर्म इत्युक्तौ हि 'वारणार्थानाम्' इति सूत्रमस्यापवादः स्यात्, विशेषविहितत्वात्। तथाच माणवकस्य कर्मत्वन्न स्यात्। नचाग्नौ 'वारणार्थानाम्' इति सावकाशमिति वाच्यम्। वारयतेर्ह्यत्र स्पर्शफलकप्रवृत्तिविघटनमर्थः। तच्चान्यतो नयनादिरूपः तादृशव्यापारप्रयोज्यफलं माणवककर्तृकस्पर्शफलकप्रवृत्तिविरहः। तत्र स्पर्शांशोऽग्निनिष्ठः माणवकनिष्ठश्च। संयोगरूपस्य स्पर्शस्य द्विनिष्ठत्वात्। प्रवृत्तिविरहश्च विषयतया अग्निनिष्ठः समवायेन माणवकनिष्ठश्च। तथाच कर्तृव्यापारप्रयोज्यफलाश्रयत्वलक्षणकर्मत्वस्य परत्वादुभयत्रापि प्राप्तौ 'वारणार्थानाम्' इत्यपादानत्वं निरवकाशत्वादपवादस्स्यादिति माणवकादपि पञ्चमी स्यात्, तद्बाधनार्थं 'कर्तुरीप्सिततमं कर्म' इत्यारब्धव्यम्। एवञ्च ईप्सितमात्रे अग्नौ सावकाशस्यापादानत्वस्य परत्वादीप्सिततमे माणवके बाधस्सिध्यति। कर्तुरीप्सिततममित्यारब्धे च द्वेष्योदासीनसङ्ग्रहार्थं 'तथायुक्तम्' इत्यप्यारब्धव्यमित्यास्तान्तावत्। भाष्ये तु बुद्धिकल्पितसंयोगविश्लेषकृतमपादानत्वमाश्रित्य प्रत्याख्यातमिदं सूत्रम्। **अन्तर्धौ** ॥ अन्तर्धावित्येतत् व्याचष्टे। **व्यवधाने सतीति** ॥ व्यवधानेनेति यावत्। **यत्कर्तृकस्येति** ॥ येनेति कर्तृतृतीयेति भावः। **आत्मनो दर्शनस्येति** ॥ आत्मन इति दर्शनशब्दयोगे कर्मणि षष्ठी। आत्मन इत्यध्याहारलभ्यम्। अत एव येनेति कर्तरि तृतीया सङ्गच्छते। अन्यथा कृद्योगषष्ठीप्रसङ्गात्। आत्मन इत्यध्याहारे तु उभयप्राप्तौ कर्मण्येवेति नियमान्न कृद्योगषष्ठी। आत्मशब्देन इच्छतिकर्ता विवक्षितः। व्यवधानेन स्वविषये यत्कर्तृकदर्शनस्य अभावमिच्छतीति यावत्। **मातुर्निलीयते कृष्ण इति** ॥ 'लीङ् श्लेषणे' श्यन्विकरणः। इह तूपसर्गवशात् व्यवधानेन परकर्तृकस्वविषयकदर्शनविरहानुकूलव्यापारे वर्तते। ततश्च कृष्णः मातृकर्तृकस्वविषयकदर्शनविरहाय कुड्यादिना प्रच्छन्नो भवतीत्यर्थः। अत्र व्यवधानमाश्रित्य मातृकर्तृकस्वविषयकदर्शनविरहस्य कृष्णेनेष्यमाणतया मातुरपादानत्वात् पञ्चमी। कर्तृतृतीयापवादोऽयं षष्ठ्यपवादो वा। भाष्ये तु बुद्धिकृतमपादानत्वमाश्रित्य इदमपि प्रत्याख्यातम्। **आख्यातोपयोगे** ॥ आख्याता उपयोगे इति छेदः। आख्यातेति तृजन्तात् प्रथमैकवचनम्। उपयोग-

## ५९३ । जनिकर्तुः प्रकृतिः । (१-४-३०)

जायमानस्य हेतुरपादानं स्यात् । ब्रह्मणः प्रजाः प्रजायन्ते ।

## ५९४ । भुवः प्रभवः । (१-४-३१)

भवनं भूः । भूकर्तुः प्रभवस्तथा । हिमवतो गङ्गा प्रभवति । तत्र प्रकाशते इत्यर्थः । 'ल्यब्लोपे कर्मण्यधिकरणे च' (वा १४७४—१४७५) । प्रासादात्प्रेक्षते, आसनात्प्रेक्षते । प्रासादमारुह्य, आसने उपविश्य, प्रेक्षते

---

पदं व्याचष्टे । **नियमपूर्वकेति** ॥ भाष्ये तथोक्तेरिति भावः । आख्यातेति तृजन्तं व्याचष्टे। **वक्तेति** ॥ अध्यापयितेत्यर्थः । **उपाध्यायादधीते इति** ॥ नियमविशेषपूर्वकं उपाध्याय-स्योच्चारणम् अनूच्चारयतीत्यर्थः । षष्ठ्यपवादोऽयम् । भाष्ये तु उपाध्यायान्निर्गतं वेदं गृह्णाती-त्यर्थमाश्रित्य प्रत्याख्यातम् । **जनिकर्तुः प्रकृतिः** ॥ जनिर्जननमुत्पत्तिः । 'जनी प्रादुर्भावे' दैवादिकोऽकर्मकः । 'इणजादिभ्यः' इति भावे इण् । 'जनीवध्योश्च' इति निषेधान्नोपधावृद्धिः। जनेः कर्तेति विग्रहः । शेषषष्ठ्या समासः । 'तृजकाभ्यां कर्तरि' इति निषेधस्तु कारकषष्ठ्या एवेति वक्ष्यते । **जायमानस्येति** ॥ जनधातोः कर्तरि लटश्शानच्, श्यन्, 'ज्ञाजनोर्जा' 'आने मुक्' उत्पत्त्याश्रयस्येत्यर्थः । प्रकृतिशब्दं व्याचष्टे । **हेतुरिति** ॥ **ब्रह्मणः इति** ॥ हिरण्यगर्भादित्यर्थः । घटादिषु कुलालादिवत् तस्य प्रजोत्पत्तौ निमित्तकारणत्वमिति भावः । वृत्तिकृन्मतमेतदयुक्तम् । संयोगविश्लेषसत्त्वेन 'ध्रुवमपाये' इत्येव सिद्धत्वात् । अतोऽत्र मूले हेतुशब्दः उपादानकारणपर एव । अत एव भाष्यकैयटयोः "गोमयाद्वृश्चिका जायन्ते गोलोमाविलोमभ्यो दूर्वा जायन्ते" इत्युदाहृत्य परिणामिषु प्रकृतिद्रव्यावयवानुस्यूतिसत्त्वेऽपि बुद्धिकृतविश्लेषसत्त्वात् 'ध्रुवमपाये' इत्येव सिद्धमिति प्रत्याख्यानं सङ्गच्छते । एवञ्च 'ब्रह्मणः प्रजाः प्रजायन्ते' इत्यत्र ब्रह्मशब्देन मायोपहितमीश्वरचैतन्यमेव विवक्षितम् । तद्धि सर्वकार्यो-पादानमिति वेदान्तसिद्धान्तः । **भुवः प्रभवः** ॥ पूर्वसूत्रे समासनिर्दिष्टमपि कर्तृग्रहणमेक-देशे स्वरितत्वप्रतिज्ञाबलादिहानुवर्तते । तदाह । **भूकर्तुरिति** ॥ भवनं भूः सम्पदादि-त्वात् क्विप् । भुवः कर्ता भूकर्ता तस्येत्यर्थः । **प्रभवः इति** ॥ प्रभवति प्रथमं प्रकाशते-ऽस्मिन्निति प्रभवः । प्रथमप्रकाशस्थानमित्यर्थः । प्रभवतीत्यस्य उत्पद्यते इत्यर्थे तु असङ्गतिः । गङ्गायास्तत्रानुत्पत्तेः । तदाह । **प्रकाशते इत्यर्थः इति** ॥ प्रथमं प्रकाशते इति यावत् । अत एव हिमवति प्रकाशते इत्यत्र न भवति । एतेन जनिकर्तुरित्यनेन 'ध्रुवमपाये' इत्यनेन च गतार्थत्वं निरस्तम् । भाष्ये तु अपक्रामतीत्यर्थमाश्रित्य 'ध्रुवमपाये' इत्यनेनैव सिद्धमिति स्थितम् । अथोपपदविभक्तयः । **ल्यब्लोपे इति** ॥ ल्यबन्तस्य लोपे अदर्शने अप्रयोगे सति गम्यमानतदर्थं प्रति कर्मणि अधिकरणे च पञ्चमी वाच्येत्यर्थः । **जिह्रेतीति** ॥ लज्जते इत्यर्थः । नन्वत्र ल्यबन्तस्य प्रयोगाभावात् कथं तदर्थं प्रति कर्माद्यवगतिरित्यत आह ।

इत्यर्थः। श्वशुराज्जिह्रेति। श्वशुरं वीक्ष्येत्यर्थः। 'गम्यमानापि क्रिया कारकविभक्तीनां निमित्तम्' (वा ५०४१)। कस्मात्त्वम्, नद्याः। 'यतश्चाध्वकालनिमानं तत्र पञ्चमी' (वा १४७७)। 'तद्युक्तादध्वनः प्रथमासप्तम्यौ' (वा १४७९)। 'कालात्सप्तमी च वक्तव्या' (वा १४७८)। वनाद्ग्रामो योजनं—योजने वा। कार्तिक्याः आग्रहायणी मासे।

## ५९५। अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते। (२-३-२९)

एतैर्योगे पञ्चमी स्यात्। 'अन्य—' इत्यर्थग्रहणम्। 'इतर' ग्रहणं प्रपञ्चार्थम्। अन्यो भिन्न इतरो वा कृष्णात्। आराद्वनात्। ऋते कृष्णात्।

---

**गम्यमानापीति** ॥ प्रकरणादिनेत्यर्थः। गम्यमानापीत्यस्य प्रयोजनान्तरमाह। **कस्मात्त्वमिति** ॥ आगतोऽसीति गम्यमानक्रियापेक्षमपादानत्वमिति भावः। नद्या इत्युत्तरम्। आगतोऽस्मीति गम्यमानक्रियापेक्षमपादानत्वमिति भावः। **यतश्चेति** ॥ यत इति तृतीयार्थे तसिः। येनावधिना अध्वनः कालस्य वा निमानं परिच्छेदः इयत्ता गम्यते, ततः पञ्चमी वाच्येत्येकं वाक्यम्। तत्र पञ्चमीति पाठेऽप्ययमेवार्थः। **तद्युक्तादिति** ॥ तेन पञ्चम्यन्तेन युक्तादन्वितात् अध्ववाचिनः प्रथमासप्तम्यौ वाच्ये इति द्वितीयं वाक्यम्। 'कालात्सप्तमी च वक्तव्या' इति वाक्यान्तरम्। तद्युक्तादित्यनुषज्यते। तेन पञ्चम्यन्तेन अन्वितात् कालवाचिनस्सप्तमी वक्तव्येत्यर्थः। **वनादिति** ॥ अत्र योजनात्मकमध्वपरिमाणं वनेन पूर्वावधिना परिच्छिद्यते। कस्मादारभ्य योजनमित्याकाङ्क्षोत्थानात्। योजने योजनमिति प्रथमासप्तम्योरपि स्वोत्तराव्यवहितदेशवृत्तित्वमर्थः। वनात्मकपूर्वावधिकयोजनोत्तरदेशे ग्राम इत्यर्थः। अवधित्वसत्त्वेऽपि विश्लेषाप्रतीतेर्ध्रुवमित्यपादानत्वाभावाद्वचनम्। **कार्तिक्याः इति** ॥ कार्तिक्याः मासे आग्रहायणीत्यन्वयः। अत्र मासात्मकं कालपरिमाणं कार्तिक्या पूर्वावधिना परिच्छिद्यते। कस्मादारभ्य मास इत्याकाङ्क्षोत्थानात्। मास इति सप्तम्यास्तु स्वोत्तराव्यवहितकालवृत्तित्वमर्थः। कार्तिकपौर्णमास्यात्मकपूर्वावधिकमासोत्तरकाले मार्गशीर्षपौर्णमासीत्यर्थः। **अन्यारात्** ॥ युक्त इति भावे क्त इत्याह। **एभिर्योगे इति** ॥ अन्य, आरात्, इतर, ऋते, दिक्शब्द, अञ्चूत्तरपद, आच्, आहि, एतैरष्टभिर्योगे सतीत्यर्थः। भिन्नादिशब्दयोगे पञ्चमीं साधयितुमाह। **अन्य इत्यर्थग्रहणमिति** ॥ व्याख्यानादिति भावः। अन्यार्थकशब्दयोगे पञ्चमीति फलितम्। तर्हीतरग्रहणं व्यर्थमन्यार्थकत्वादेव सिद्धेरित्यत आह। **इतरग्रहणं प्रपञ्चार्थमिति** ॥ 'पचि विस्तारे' अन्यशब्दस्य अन्यार्थकशब्दग्रहणोपलक्षणार्थत्वकथनस्य प्रयोजनकथनार्थमिति यावत्। **अन्यो भिन्न इतरो वेति** ॥ भेदवान् विलक्षण इत्याद्युपलक्षणमिदम्। कृष्णप्रतियोगिकभेदवानित्यर्थः। षष्ठ्यपवादोऽयम्। अन्यादिशब्दानामवधिनियमसत्त्वेऽपि संयोगविश्लेषाभावादपादानत्वस्य न प्रसक्तिः। एवमग्रेऽपि। **आराद्वनादिति** ॥

---

१. भाष्ये तु 'प्रश्नाख्यानयोश्च' (वा १४७८) इति वार्तिकमेतदर्थं वर्तते।

पूर्वो ग्रामात्। दिशि दृष्टः शब्दो दिक्शब्दः। तेन सम्प्रति देशकालवृत्तिना योगे-ऽपि भवति। चैत्रात्पूर्वः फाल्गुनः। अवयववाचियोगे तु न। 'तस्य परमाम्रेडितम्' (सू ८३) इति निर्देशात्। पूर्वं कायस्य। अञ्चूत्तरपदस्य तु दिक्शब्दत्वेऽपि 'षष्ठ्यतसर्थ—' (सू ६०९) इति षष्ठीं बाधितुं पृथग्ग्रहणम्। प्राक्—प्रत्यग्वा ग्रामात्। आच्, दक्षिणा ग्रामात्। आहि, दक्षिणाहि ग्रामात्। 'अपादाने पञ्चमी' (सू ५८७) इति सूत्रे 'कार्तिक्याः प्रभृति' इति भाष्यप्रयोगात्प्रभृत्यर्थयोगे पञ्चमी। भवात्प्रभृति—आरभ्य वा सेव्यो

---

वनस्य दूरं समीपं वेत्यर्थः। 'आराद्दूरसमीपयोः' इत्यमरः। **ऋते कृष्णादिति** ॥ ऋते इत्यकारान्तमव्ययम्। "ऋते वर्जने" इत्यमरः। कृष्णस्य वर्जने सुखन्नास्तीत्यर्थः। 'क्व कर्मप्रध्वंसः फलति पुरुषाराधनमृते' इति शिवरहस्यान्तर्गतस्तुतिगतः प्रयोगस्त्वार्षः। 'ततोऽन्यत्रापि दृश्यते' इति वा द्वितीया। 'ऋते द्वितीया च' इति चान्द्रं सूत्रम्। अथ दिक्छब्दयोगे उदाहरति। **पूर्वो ग्रामादिति** ॥ ग्रामावधिकपूर्वदिग्वर्ती ग्राम इत्यर्थः। ननु चैत्रात् पूर्वः फाल्गुन इत्यत्र पूर्वशब्दस्य कालवाचकतया दिग्वाचकत्वाभावात् कथन्तद्योगे पञ्चमीत्यत आह। **दिशि दृष्ट इति** ॥ रूढ्या दिग्विशेषवाचकाः पूर्वादय एव गृह्यन्ते। नत्वैन्द्रीककुबादयः। **सम्प्रतीति** ॥ कदाचिद्दिग्वाचकानामिदानीं कालवाचकानामपि योगे पञ्चमी भवतीत्यर्थः। नन्वेवं सति पूर्वं कायस्येत्यत्रापि स्यादित्यत आह। **अवयववाचीति** ॥ **तस्य परमिति** ॥ तस्येति हि प्रकृतं द्विरुक्तं परामृशति। द्विरुक्तस्य परावयवं परभूतमाम्रेडितमिति तदर्थः। **पूर्वं कायस्येति** ॥ शरीरस्य पूर्वावयव इत्यर्थः। अञ्चुधातुः उत्तरपदं यस्य सः अञ्चूत्तरपदः प्रागादिदिक्छब्दः। नतु सध्र्यङ् इत्यादिशब्दोऽपि। दिक्शब्दसाहचर्यात्। तेन सध्र्यङ् देवदत्तेनेत्यत्र न पञ्चमी। ननु दिक्शब्दत्वादेव सिद्धे अञ्चूत्तरपदग्रहणं व्यर्थमित्यत आह। **अञ्चूत्तरपदस्येति** ॥ षष्ठ्यतसर्थेत्यनन्तरं परत्वात् प्राप्तमिति शेषः। **प्राक् प्रत्यग्वा ग्रामादिति** ॥ ग्रामावधिक इत्यर्थः। **आजिति** ॥ आच्प्रत्ययान्तयोगे उदाहरणं वक्ष्यत इति सूचनमिदम्। **दक्षिणा ग्रामादिति** ॥ ग्रामावधिकायां दक्षिणस्यां दिशीत्यर्थः। **आहीति** ॥ आहिप्रत्ययान्तयोगे उदाहरणसूचनमिदम्। **दक्षिणाहि ग्रामादिति** ॥ ग्रामावधिकायां दक्षिणस्यां दिशि दूर इत्यर्थः। 'आहि च दूरे' इत्याहिप्रत्ययः। आजाहिप्रत्ययान्तयोर्दिक्शब्दत्वेऽपि 'षष्ठ्यतसर्थ' इति षष्ठीं बाधितुं पृथक् ग्रहणम्। नन्वेवमपि 'भवात्प्रभृत्यारभ्य वा सेव्यो हरिः' इत्यादौ कथं पञ्चमी। अन्यादिशब्दयोगाभावादित्यत आह। **अपादाने इति** ॥ **प्रभृतियोगे इति** ॥ प्रभृत्यर्थकशब्दयोगे इत्यर्थः। तथा हि। 'अपादाने पञ्चमी' इति सूत्रे भाष्ये "यतश्चाध्वकालनिमानम्' इति वार्तिकं पठित्वा कार्तिक्याः आग्रहायणी मासे इत्युदाहृत्य 'इदं न वक्तव्यम्' इति तद्वार्तिकप्रत्याख्यानमुपक्षिप्य 'इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते, कार्तिक्याः प्रभृत्याग्रहायणी मासे" इत्युक्तम्। प्रभृतिशब्दाभावेऽपि तदर्थसत्तया पञ्चमी सिद्धेत्यर्थः। एवं वदता भाष्यकृता प्रभृत्यर्थकशब्दयोगे पञ्चमीति वचनं ज्ञाप्यते। अन्यथा प्रभृतिपदाभावे पञ्च-

हरिः । 'अपपरिबहिः—' (सू ६६६) इति समासविधानात् ज्ञापकाद्बहिर्योगे पञ्चमी । ग्रामाद्बहिः ।

## ५९६ । अपपरी वर्जने । (१-४-८८)

एतौ वर्जने कर्मप्रवचनीयौ स्तः ।

## ५९७ । आङ्मर्यादावचने । (१-४-८९)

आङ् मर्यादायामुक्तसंज्ञः स्यात् । वचनग्रहणादभिविधावपि ।

## ५९८ । पञ्चम्यपाङ्परिभिः । (२-३-१०)

एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् । अप हरेः, परिहरेः, संसारः । परिरत्र वर्जने । लक्षणादौ तु हरिं परि । आमुक्तेः संसारः । आसकलाद्ब्रह्म ।

---

म्यर्थे वार्तिकस्यावश्यकत्वात्तदसङ्गतिः स्पष्टैव । एवञ्च प्रभृतिशब्दपर्यायशब्दयोगेऽपि पञ्चमी भवति । अत एव च 'कार्तिक्याः प्रभृति' इति भाष्यव्याख्यावसरे तत आरभ्येत्यर्थः इति कैयट आह । तत्र हि । तत इति पञ्चम्यास्तसिः । एतत् सर्वमभिप्रेत्योदाहरति । **भवात् प्रभृति, आरभ्य वेति** ॥ भवः उत्पत्तिः, आरभ्येत्यस्यावधिं परिगृह्येत्यर्थः । प्रभृतीत्यव्ययमप्येतदर्थकमेव । भवमवधिं परिगृह्य हरिस्सेव्य इत्यर्थः । उत्पत्तिक्षणात्मकपूर्वावधिकोत्तरकाले सर्वदा आमरणं हरिस्सेव्य इति यावत् । अत्रारभ्येति क्रियापेक्षया कर्मत्वविवक्षायां द्वितीयैव । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इत्युक्तेः । यथा 'सूर्योदयमारभ्य आस्तमयात् जपति' इत्यादौ । शेषत्वविवक्षायान्तु षष्ठीं बाधित्वा भवशब्दात् पञ्चमी । प्रभृतिशब्दयोगे तु आरभ्येत्यर्थे कदापि न द्वितीया । प्रभृतिशब्दार्थस्यावधिं परिगृह्येत्यस्यावध्यादिघटितत्वेन क्रियात्वाभावात् । **अपपरीति** ॥ बहिश्शब्दयोगे पञ्चमीं सिद्धवत्कृत्य 'अपपरिबहिरञ्चवः पञ्चम्या' इति समासविधानात् बहिश्शब्दयोगे पञ्चमी विज्ञायते इत्यर्थः । इदञ्च 'अपपरि' इति सूत्रे भाष्ये स्पष्टम् । 'करस्य करभो बहिः' इति त्वसाध्वेव । 'ज्ञापकसिद्धन्न सर्वत्र' इति वा कथञ्चित्समाधेयम् । **अपपरी वर्जने** ॥ **कर्मप्रवचनीयौ स्त इति** ॥ कर्मप्रवचनीयाः इत्यधिकृतस्य द्विवचनेन विपरिणाम इति भावः । वर्जने किम् । परिषिञ्चति । सर्वतस्सिञ्चतीत्यर्थः । अत्रोपसर्गत्वात् 'उपसर्गात्सुनोति' इति षत्वम् । **आङ्मर्यादावचने** ॥ **उक्तसंज्ञः इति** ॥ कर्मप्रवचनीयसंज्ञक इत्यर्थः । ननु 'आङ्मर्यादायाम्' इत्येव सिद्धे वचनग्रहणं व्यर्थमित्यत आह । **वचनग्रहणादिति** ॥ तेन विनेति मर्यादा, तेन सहेत्यभिविधिः । मर्यादाशब्दो यत्रोच्यते तन्मर्यादावचनम् 'आङ्मर्यादाभिविध्योः' इति सूत्रम् । तत्र य आङ् दृष्टः स कर्मप्रवचनीयसंज्ञकस्स्यादित्यर्थः । तथाच मर्यादाभिविध्योराङ् कर्मप्रवचनीय इति फलतीति भावः । **पञ्चम्यपाङ्परिभिः** ॥ **एतैरिति** ॥ अप आङ् परि

## ५९९ । प्रतिः प्रतिनिधिप्रतिदानयोः । (१-४-९२)

एतयोरर्थयोः प्रतिरुक्तसंज्ञः स्यात् ।

## ६०० । प्रतिनिधिप्रतिदाने च यस्मात् । (२-३-११)

अत्र कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् । प्रद्युम्नः कृष्णात्प्रति । तिलेभ्यः प्रतियच्छति माषान् ।

## ६०१ । अकर्तर्यृणे पञ्चमी । (२-३-२४)

कर्तृवर्जितं यदृणं हेतुभूतं ततः पञ्चमी स्यात् । शताद्बद्धः । 'अकर्तरि' किम् । शतेन बन्धितः ।

---

इत्येतैरित्यर्थः । **कर्मप्रवचनीयैरिति** ॥ कर्मप्रवचनीया इत्यतस्तदनुवृत्तेरिति भावः । **अप हरेः, परिहरेः, संसारः इति** ॥ अपहरेस्संसारः परिहरेस्संसार इत्यन्वयः । हरिं वर्जयित्वा जनिमृतिचक्रात्मकं संसरणमित्यर्थः । ननु 'वृक्षं प्रति विद्योतते, भक्तो हरिं प्रति' इत्यादौ 'लक्षणेत्थम्भूत' इति कर्मप्रवचनीयत्वात् 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीयां परत्वात् अपवादत्वाच्च बाधित्वा 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी स्यादित्यत आह । **परिरत्रेति** ॥ 'पञ्चम्यपाङ्परिभिः' इत्यत्र वर्जनार्थकेनापेन साहचर्यात् परिरपि वर्जनार्थक एव गृह्यते इत्यर्थः । **आ मुक्तेरिति** ॥ मुक्तेः प्रागिति यावत् । **आ सकलादिति** ॥ ब्रह्म सकलमभिव्याप्य वर्तत इत्यर्थः । **प्रतिः प्रतिनिधि** ॥ सदृशः प्रतिनिधिः, दत्तस्य प्रतिनिर्यातनं प्रतिदानम् । **उक्तसंज्ञः इति** ॥ कर्मप्रवचनीयसंज्ञक इत्यर्थः । **प्रतिनिधि** ॥ **अत्रेति** ॥ सूत्रोक्तविषये इत्यर्थः । सूत्रे यस्मादिति षष्ठ्यर्थे पञ्चमी अस्मादेव निर्देशात् । 'कृष्णस्य प्रतिनिधिः' इति तु 'ज्ञापकसिद्धन्न सर्वत्र' इति समाधेयम् । तथाच यत्सम्बन्धिनी प्रतिनिधिप्रतिदाने तस्मात् कर्मप्रवचनीययुक्तात्पञ्चमीत्यर्थः फलति । **प्रद्युम्नः कृष्णात्प्रतीति** ॥ युद्धादौ प्रद्युम्नः कृष्णनिरूपितसादृश्यवानित्यर्थः । पञ्चम्यर्थस्सादृश्यम् । प्रतिस्तु तद्द्योतकः । **तिलेभ्यः इति** ॥ ऋणत्वेन गृहीतान् तिलान् स्वरूपेण मूल्याद्यात्मना वा प्रत्यर्पयतीत्यर्थः । कर्मणि पञ्चमी । **अकर्तर्यृणे** ॥ 'हेतौ' इति सूत्रमनुवर्तते । अकर्तरि हेतुभूते ऋणे विद्यमानादित्यर्थः । फलितमाह । **कर्तृवर्जितमिति** ॥ कर्तृसंज्ञारहितमित्यर्थः । **शताद्बद्धः इति** ॥ नियमितकाले प्रत्यर्पणाभावे सति सुवर्णादिशतेन ऋणेन हेतुना अधमर्णो बद्ध इत्यर्थः । हेतुतृतीयापवादः । **शतेन बन्धितः इति** ॥ अधमर्णः उत्तमर्णेनेति शेषः । बन्धेर्हेतुमण्ण्यन्तात्कर्मणि क्तः । अधमर्णः उत्तमर्णेन बद्ध इत्यण्यन्तस्यार्थः । शतेन ऋणेन प्रयोजककर्त्रा उत्तमर्णेन प्रयोज्यकर्त्रा बन्धनं कारितः अधमर्ण इति ण्यन्तस्यार्थः । अत्र शतमृणं प्रयोजकत्वात् कर्तृसंज्ञं हेतुसंज्ञञ्च । 'तत्प्रयोजको हेतुश्च' इत्यत्र चकारेण कर्तृसंज्ञाया अपि विधानात् । ततश्च शतशब्दात् कर्तरि तृतीयां बाधित्वा अपवादत्वात् 'पञ्चमी स्यात्' अतः अकर्तरीत्युक्तमिति

## ६०२। विभाषा गुणेऽस्त्रियाम्। (२-३-२५)

गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात्। जाड्यात्—जाड्येन वा बद्धः। 'गुणे' किम्। धनेन कुलम्। 'अस्त्रियाम्' किम्। बुद्ध्या मुक्तः। 'विभाषा' इति योगविभागादगुणे स्त्रियां च क्वचित्। धूमादग्निमान्। नास्ति घटोऽनुपलब्धेः।

## ६०३। पृथग्विनानानाभिस्तृतीयान्यतरस्याम्। (२-३-३२)

एभिर्योगे तृतीया स्यात्पञ्चमीद्वितीये च। अन्यतरस्यांग्रहणं समुच्चयार्थम्, पञ्चमीद्वितीये चानुवर्तेते। पृथग्रामेण—रामात्—रामं वा। एवं विना, नाना।

---

भावः। शतस्य हेतुत्वेऽपि कर्तृत्वान्न ततः पञ्चमीति भावः। **विभाषा**॥ हेतावित्यनुवर्तते। तदाह। **गुणे हेतावस्त्रीलिङ्गे इति**॥ विद्यमानादिति शेषः। **जाड्यादिति**॥ जडस्य भावो जाड्यम्। 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ्। ननु धूमादग्निमानित्यादौ कथं पञ्चमी। धूमादेरगुणत्वादित्यत आह। **योगविभागादिति**॥ 'विभाषा' इति योगो विभज्यते। हेतावित्यनुवर्तते, पञ्चमीति च। हेतौ पञ्चमी वा स्यादित्यर्थः। ततश्च धूमादग्निमानित्यादि सिद्धम्। ततः गुणे स्त्रियामिति। तत्र विभाषेत्यनुवर्तते, पञ्चमीति च। गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यादित्युक्तोऽर्थः। ततश्च जाड्याद्बद्ध इत्यादि सिद्धम्। ननु विभाषेत्येव सिद्धे गुणे स्त्रियामिति व्यर्थमित्यत आह। **अगुणे स्त्रियाञ्च क्वचिदिति**॥ योगविभागस्य इष्टसिद्ध्यर्थत्वादिति भावः। अत्रागुणे उदाहरति। **धूमादिति**॥ अग्निमानित्यनन्तरं ज्ञायत इति शेषः। धूमस्य अग्निहेतुत्वात्। अत्र धूमस्य अगुणत्वेऽपि हेतुत्वात् ततः पञ्चमीति भावः। स्त्रियामुदाहरति। **नास्ति घटः इति**॥ घट इत्यनन्तरं ज्ञायत इति शेषः। **अनुपलब्धेरिति**॥ उपलब्धिः ज्ञानम्, तस्या अभावः अनुपलब्धिः। नञ्तत्पुरुषः। न चार्थाभावेऽव्ययीभावश्शङ्क्यः। अर्थाभावे तयोर्विकल्पस्य वक्ष्यमाणत्वात्। **पृथग्विना**॥ **पञ्चमीद्वितीये चेति**॥ तृतीयाभावपक्षे इति शेषः। 'अपादाने पञ्चमी, षष्ठ्यतसर्थप्रत्ययेन, एनपा द्वितीया, पृथग्विना' इति सूत्रक्रमः। तत्र षष्ठीत्यस्वरितत्वान्नानुवर्तते, पञ्चमी द्वितीयेति चानुवर्तते। तथाच तृतीयाभावपक्षे पञ्चमी द्वितीया चेति भावः। ननु तृतीयाभावपक्षे द्वितीयैव सन्निहितत्वात् स्यात्, नतु पञ्चम्यपि, षष्ठ्यतसर्थेनेत्यत्र तदनुवृत्तेरभावात्। अतोऽत्र पञ्चम्यास्समावेशोऽनुपपन्न इत्यत आह। **अन्यतरस्यांग्रहणमिति**॥ तृतीया चेत्येतावतैव सन्निहितद्वितीयासमुच्चयसिद्धेरन्यतरस्याङ्गुरुयत्नकरणं व्यवहिताया अपि पञ्चम्यास्समुच्चयार्थम्। अव्ययानामनेकार्थकत्वादिति भावः। ननु पञ्चम्याः 'षष्ठ्यतसर्थे' इत्यत्रानुवृत्ताया इहानुवृत्तेरसम्भवात् कथमिह तदुपस्थितिरित्यत आह। **पञ्चमीद्वितीये चानुवर्तेते इति**॥ मण्डूकप्लुत्येति शेषः। **पृथग्रामेणेति**॥ रामप्रतियोगिकभेदवानित्यर्थः। **एवं विना नानेति**॥

## ६०४ । करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य । (२-३-३३)

एभ्योऽद्रव्यवचनेभ्यः करणे तृतीयापञ्चम्यौ स्तः । स्तोकेन स्तोकाद्वा मुक्तः । द्रव्ये तु स्तोकेन विषेण हतः ।

## ६०५ । दूरान्तिकार्थेभ्यो द्वितीया च । (२-३-३५)

एभ्यो द्वितीया स्याच्चात्पञ्चमीतृतीये च । प्रातिपदिकार्थमात्रे विधिरयम् । ग्रामस्य दूरम्—दूरात्—दूरेण वा, अन्तिकम्—अन्तिकात्—अन्तिकेन वा । 'असत्त्ववचनस्य' इत्यनुवृत्तेर्नेह । दूरः पन्थाः ॥

इति पञ्चमी विभक्तिः ।

---

विना रामेण, रामात्, रामम् । नाना रामेण, रामात्, रामम्, वा । पृथग्विनानानात्रयोऽपि भेदार्थका इति केचित् । "पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने" इत्यमरः । रामस्य वर्जने सुखं नास्तीत्यर्थः । **करणे च** ॥ **एभ्य इति** ॥ स्तोक अल्प कृच्छ्र कतिपय एभ्यश्चतुर्भ्यः इत्यर्थः । असत्त्वपदं व्याचष्टे । **अद्रव्येति** ॥ अन्यतरस्यामित्यनुवर्तते, पञ्चमीति च । ततश्च करणे पञ्चमी वेति लभ्यते । तदभावे तु तृतीया सिद्धैव । तदाह । **तृतीयापञ्चम्याविति** ॥ **स्तोकेन स्तोकाद्वा मुक्तः इति** ॥ लघुना अनायासेन मुक्त इत्यर्थः । आयासो न द्रव्यमिति भावः । **द्रव्ये त्विति** ॥ द्रव्ये वृत्तौ स्तोकेन विषेण हत इति तृतीयैवेत्यर्थः । अल्पेनाल्पाद्वा मुक्तः, कृच्छ्रेण कृच्छ्राद्वा मुक्तः । कष्टेनेत्यर्थः । कतिपयेन कतिपयाद्वा मुक्तः । अकृत्स्नेन साधनेनेत्यर्थः । **दूरान्तिक** ॥ **एभ्य इति** ॥ दूरार्थकेभ्यः अन्तिकार्थकेभ्यश्चेत्यर्थः । चकारः व्यवहितयोरपि पञ्चमीतृतीययोस्समुच्चयार्थः, नतु दूरान्तिकार्थैःषष्ठ्यन्यतरस्याम्' इति सन्निहितषष्ठ्या अपि । व्याख्यानात् । तदाह । **चात्पञ्चमीतृतीये चेति** ॥ **प्रातिपदिकार्थमात्रे विधिरयमिति** ॥ व्याख्यानादिति भावः । तथाच प्रथमापवाद इति फलितम् । 'दूरादावसथान्मूत्रन्दूरात्पादावनेजनम्' इति भाष्यप्रयोगात् सप्तम्यर्थेऽधिकरणेऽप्ययं विधिः । ननु दूरः पन्थाः इत्यत्र कथं न पञ्चमीत्यत आह । **असत्त्ववचनस्येति** ॥ दूरः पन्था इत्यत्र पन्थाः द्रव्यम् । तद्विशेषणं दूरशब्दस्सत्त्ववचन इति भावः ॥

इति पञ्चमी विभक्तिः ।

## अथ षष्ठी विभक्तिः ।

### ६०६ । षष्ठी शेषे । (२-३-५०)

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषः, तत्र षष्ठी स्यात् । राज्ञः पुरुषः । कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । मातुः स्मरति । एधो दकस्योपस्कुरुते । भजे शम्भोश्चरणयोः । फलानां तृप्तः ।

अथ षष्ठी विभक्तिः । **षष्ठी शेषे ॥** उक्तादन्यश्शेषः । 'कर्मणि द्वितीया' इत्यादिसूत्रेषु द्वितीयादिविधिषु हि कर्मकर्तृकरणसम्प्रदानापादानाधिकरणकारकाण्यनुक्रान्तानि । प्रथमाविधौ प्रातिपदिकार्थोऽनुक्रान्तः । एतेभ्यः अन्यः स्वस्वामिभावादिसम्बन्धः शेषपदार्थ इत्यर्थः । तत्रासति बाधके सम्बन्धो विशेषरूपेण सामान्यरूपेण च भासते । न हि 'निर्विशेषं सामान्यम्' इति न्यायात् । सति तु बाधके मातुः स्मरतीत्यादौ सम्बन्धत्वेनैव भानम् । कर्मत्वादिविशेषरूपेणापि भाने द्वितीयादिप्रसङ्गादिति स्थितिः । राज्ञः पुरुष इत्यत्र स्वस्वामिभावरूपविशेषात्मना सम्बन्धत्वरूपसामान्यात्मना च सम्बन्धषष्ठ्यर्थः । राजाश्रितस्वामित्वनिरूपितस्वत्वात्मकसम्बन्धाश्रयः पुरुष इति बोधः । आश्रयत्वादि तु संसर्गमर्यादया भासते । तत्र पुरुषो मुख्यं विशेष्यम् । सम्बन्धस्त्वाधेयतया पुरुषविशेषणम् । राजा तु आश्रयतया सम्बन्धविशेषणम् । सम्बन्धस्त्वाधेयतया राजानं प्रति विशेष्यम् । 'प्रधानप्रत्ययार्थवचनम्' इति वचनेन प्रत्ययार्थस्य प्रकृत्यर्थं प्रति प्राधान्यावगमात् । अत एव पुरुषशब्दादपि न षष्ठी । राजनिरूपितसम्बन्धाश्रयःपुरुष इति बोधे सम्बन्धस्य प्रकृत्यर्थपुरुषं प्रति विशेषणत्वेन विशेष्यत्वेन भानानुपपत्तेः । यदा तु पुरुषगतस्वत्वनिरूपितस्वामित्वरूपसम्बन्धाश्रयो राजेति बोधः, तदा पुरुषस्य राजेति पुरुषशब्दात् षष्ठी भवत्येवेत्यन्यत्र विस्तरः । सतां गतमित्यादौ कर्तृतृतीयादिकमाशङ्क्य आह । **कर्मादीनामपीति ॥** कर्मत्वकर्तृत्वादीनामपि सम्बन्धत्वसामान्यात्मना विवक्षायां षष्ठ्येव, नतु कारकविभक्तय इत्यर्थः । तथाच 'क्तस्य च वर्तमाने' इति सूत्रे भाष्यम् । 'कर्मत्वादीनामविवक्षा शेषः' इति । **सतां गतमिति ॥** भावे क्तः । सत्सम्बन्धिगमनमित्यर्थः । कर्तृत्वविवक्षायान्तु सद्भिर्गतमिति तृतीया भवत्येव । कृद्योगलक्षणा षष्ठी तु न भवति । 'न लोक' इति निषेधात् । **सर्पिषो जानीते इति ॥** करणत्वविवक्षायां सर्पिषा उपायेन प्रवर्तते इत्यर्थः । करणत्वस्य सम्बन्धत्वविवक्षायान्तु षष्ठी । कर्त्राश्रिता सर्पिस्सम्बन्धिनी प्रवृत्तिरिति बोधः । **मातुः स्मरतीति ॥** कर्मत्वविवक्षायां मातरं स्मरतीत्यर्थः । कर्मत्वस्य शेषत्वविवक्षायान्तु देवदत्तकर्तृकमातृसम्बन्धि स्मरणमित्यर्थः । **एधोदकस्योपस्कुरुते इति ॥** एधशब्दः अकारान्तः पुल्लिङ्गः 'कारके' इति सूत्रे "एधाः पक्ष्यन्ते" इति भाष्यप्रयोगात् । एधाश्च उदकानि चेति द्वन्द्वात् षष्ठी । 'जातिरप्राणिनाम्' इत्येकवद्भावः । कर्मत्वविवक्षायां एधोदकं शोषणगन्धद्रव्याधानादिना परिष्कुरुते इत्यर्थः । कर्मत्वस्य शेषत्वविवक्षायान्तु एधोदकसम्बन्धि परिष्करणमिति

## ६०७ । षष्ठी हेतुप्रयोगे । (२-३-२६)

हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात् । अन्नस्य हेतोर्वसति ।

## ६०८ । सर्वनाम्नस्तृतीया च । (२-३-२७)

सर्वनाम्नो हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया स्यात्षष्ठी च । केन हेतुना वसति । कस्य हेतोः । 'निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्' (वा १४७३)। किं निमित्तं वसति, केन निमित्तेन, कस्मै निमित्ताय, इत्यादि । एवं 'किं कारणम्' 'को हेतुः' 'किं प्रयोजनम्' इत्यादि । 'प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः' । ज्ञानेन निमित्तेन हरिः सेव्यः । ज्ञानाय निमित्ताय, इत्यादि ।

## ६०९ । षष्ठ्यतसर्थप्रत्ययेन । (२-३-३०)

बोधः । एधश्शब्दस्सकारान्तोऽप्यस्ति नपुंसकलिङ्गः । 'काष्ठन्दार्विन्धनन्त्वेध इध्ममेधस्समित् स्त्रियाम्' इति कोशात् । 'यथैधांसि समिद्धोऽग्निः' इत्यादिदर्शनाच्च । तथा सति एधः दकस्येति छेदः । उदकशब्दसमावेशे एध उदकस्येत्यापत्तेः । उदकशब्दपर्यायो दकशब्दोऽप्यस्ति । "भुवनममृतं जीवनं स्यात् दकञ्च" इति हलायुधकोशात् । तथाच एधः कर्तृ उदकं परिष्कुरुते इत्यर्थः । कर्मत्वस्य शेषत्वविवक्षायान्तु षष्ठी । निम्बकरञ्जादिकाष्ठविशेषप्रज्वलिताग्नितप्तोदकस्य गुणविशेषो वैद्यशास्त्रप्रसिद्धः । **भजे शम्भोश्चरणयोरिति** ॥ अत्र चरणयोः कर्मत्वस्य शेषत्वविवक्षायां षष्ठी । शम्भुचरणसम्बन्धि भजनमित्यर्थः । **फलानां तृप्तः इति** ॥ अत्रापि करणत्वस्य शेषत्वविवक्षायां षष्ठी । फलसम्बन्धिनी तृप्तिरिति बोधः । **षष्ठी हेतुप्रयोगे** ॥ हेताविल्यनुवर्तते । तदाह । **हेतौ द्योत्ये इति** ॥ हेतुत्वे द्योत्ये इत्यर्थः । हेतुवाचकात् षष्ठीति फलितम् । 'हेतौ' इति तृतीयां बाधित्वा षष्ठी । हेतुप्रयोगे किम् । अन्नेन वसति । हेतौ द्योत्ये इति किम् । अन्नस्य हेतोस्तुभ्यं नमः । अत्र युष्मच्छब्दान्न भवति । **सर्वनाम्नस्तृतीया च** ॥ सर्वनाम्नः इति षष्ठी । तदाह । **सर्वनाम्नो हेतुशब्दस्य चेति** ॥ कस्माद्भवतीत्यपेक्षायां सन्निहितत्वात् सर्वनामहेतुभ्यामिति गम्यते इत्यभिप्रेत्योदाहरति । **केन हेतुनेति** ॥ सर्वनाम्न इति यदि पञ्चमी स्यात्, तदा हेतुशब्दात् षष्ठी न स्यादिति बोध्यम् । **निमित्तपर्यायेति** ॥ निमित्तपर्यायाणां प्रयोगे तेभ्यस्तत्समानाधिकरणेभ्यश्च सर्वासां विभक्तीनां प्रायेण प्रयोगो भवतीत्यर्थः । **किन्निमित्तं वसतीति** ॥ प्रथमान्तं द्वितीयान्तञ्च ज्ञेयम् । **इत्यादीति** ॥ कस्मात् निमित्तात्, कस्य निमित्तस्य, कस्मिन्निमित्ते । पर्यायग्रहणस्य प्रयोजनमाह । **एवं किं कारणमित्यादि** ॥ प्रायग्रहणस्य प्रयोजनमाह । **प्रायग्रहणादिति** ॥ एवञ्च 'षष्ठी हेतुप्रयोगे' 'सर्वनाम्नस्तृतीया च' इति सूत्रद्वयं न कर्तव्यमेवेति भावः । **षष्ठ्यतसर्थ** ॥ **एतद्योगे इति** ॥ 'दिक्शब्देभ्यस्सप्तमीपञ्चमीप्रथमाभ्यो दिग्देश-

एतद्योगे षष्ठी स्यात्। '—दिक्छब्द—' (सू ५९५) इति पञ्चम्या अपवादः। ग्रामस्य दक्षिणतः, पुरः, पुरस्तात्, उपरि, उपरिष्टात्।

## ६१०। एनपा द्वितीया। (२-३-३१)

एनबन्तेन योगे द्वितीया स्यात्। 'एनपा' इति योगविभागात्षष्ठ्यपि। दक्षिणेन ग्रामं—ग्रामस्य वा।

## ६११। दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्। (२-३-३४)

एतैर्योगे षष्ठी स्यात्पञ्चमी च। दूरं, निकटं, ग्रामस्य—ग्रामाद्वा।

## ६१२। ज्ञोऽविदर्थस्य करणे। (२-३-५१)

---

कालेष्वस्तातिः' इत्यारभ्य 'आहि च दूरे' 'उत्तराच्च' इत्यन्तैस्सूत्रैर्दिग्देशकालवृत्तिभ्यश्शब्देभ्यः स्वार्थे प्रत्यया विहिताः। तत्र 'दक्षिणोत्तराभ्यामतसुच्' इति विहितः यः अतसुच्प्रत्ययः तस्यार्थः दिग्देशकालरूपः स एवार्थो यस्य सः अतसर्थप्रत्ययः तद्योगे इत्यर्थः। यद्यप्यतसर्थप्रत्ययेषु अस्तातिरेव प्रथमः। तथापि लाघवादतसर्थेत्युक्तम्, न त्वस्तात्यर्थेति। संयुक्ताक्षरघटितत्वेन गौरवात्। **दिक्शब्देतीति** ॥ 'अन्यारात्' इति सूत्रे दिक्शब्देत्यनेन या पञ्चमी विहिता तदपवाद इत्यर्थः। **दक्षिणतः इति** ॥ सप्तमीपञ्चमीप्रथमान्तात् स्वार्थे दिग्देशकालवृत्तेः दक्षिणशब्दात् अतसुच्। दक्षिणस्यां, दक्षिणस्याः, दक्षिणा, वा दिगित्यर्थः। एवं देशे काले च। **पुरः इति** ॥ पूर्वाशब्दादस्तात्यर्थे 'पूर्वाधरावराणामसिपुरधवश्चैषाम्' इत्यसिप्रत्ययः प्रकृतेः पुरादेशश्च। पूर्वस्यां, पूर्वस्याः, पूर्वा, वेत्यर्थः। **पुरस्तादिति** ॥ पूर्वशब्दादस्तातिप्रत्यये सति 'अस्ताति च' इति प्रकृतेः पुरादेशः। पुरश्शब्दसमानार्थकमिदम्। **उपरीति** ॥ 'उपर्युपरिष्टात्' इति सूत्रेण ऊर्ध्वशब्दात् रिल्प्रत्ययः रिष्टातिल्प्रत्ययश्च। प्रकृतेरुपादेशश्च निपातितः। ऊर्ध्वायान्दिशि, ऊर्ध्वाया दिशः, ऊर्ध्वा दिगिति वा, अर्थः। एवं देशे कालेऽपि। **एनपा द्वितीया** ॥ 'षष्ठ्यतसर्थ' इति षष्ठ्याः नित्यं बाधे प्राप्ते आह। **योगविभागादिति** ॥ एनपेति योगो विभज्यते। 'षष्ठ्यतसर्थ' इति पूर्वसूत्रात् षष्ठीत्यनुवर्तते। एनबन्तेन योगे षष्ठी स्यादित्यर्थः। द्वितीयेति योगान्तरम्। एनपेत्यनुवर्तते। एनबन्तेन योगे द्वितीया स्यादित्युक्तोऽर्थः। **दक्षिणेनेति** ॥ 'एनबन्यतरस्यामदूरेऽपञ्चम्याः' इत्येनप्। **एवमुत्तरेणेति** ॥ उत्तरेण ग्रामं, ग्रामस्य, वेत्युदाहरणमित्यर्थः। पूर्वेण ग्रामं ग्रामस्य वेत्याद्यपि बोध्यम्। दिक्शब्देभ्य एनब्विधेः। भाष्ये तु 'षष्ठ्यतसर्थ' इति सूत्रात् प्राक् 'एनपा द्वितीया' इत्यस्य पाठ इति 'पृथग्विना' इति सूत्रे उक्तम्। अतोऽत्र सत्यपि योगविभागे षष्ठीग्रहणानुवृत्तेरसम्भवादेनपा योगे षष्ठ्यसाधुरेवेति युक्तम्। **दूरान्तिकार्थैः** ॥ **एतैरिति** ॥ दुरार्थकैरन्तिकार्थकैश्च शब्दैर्योगे इत्यर्थः। **पञ्चमी चेति** ॥ षष्ठ्यभावे 'अपादाने पञ्चमी' इत्यतः अनुवृत्ता पञ्चमीति भावः। 'एनपा द्वितीया' इति, पृथग्विनानानाभिस्तृतीया' इति, द्वितीयातृतीये सन्निहिते अपि न समुच्चीयेते। व्याख्यानात्। **ज्ञोऽविदर्थस्य** ॥ ज्ञः

जानातेरज्ञानार्थस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात् । सर्पिषो ज्ञानम् ।

### ६१३ । अधीगर्थदयेशां कर्मणि । (२-३-५२)

एषां कर्मणि शेषे षष्ठी स्यात् । मातुः स्मरणम् । सर्पिषो दयनम्, ईशनं वा ।

### ६१४ । कृञः प्रतियत्ने । (२-३-५३)

प्रतियत्नो गुणाधानम् । कृञः कर्मणि शेषे षष्ठी स्याद्गुणाधाने । एधोदकस्योपस्करणम् ।

### ६१५ । रुजार्थानां भाववचनानामज्वरेः । (२-३-५४)

**भावकर्तृकाणां ज्वरिवर्जितानां रुजार्थानां कर्मणि शेषे षष्ठी स्यात् ।**

---

अविदर्थस्येति च्छेदः । ज्ञ इति ज्ञाधातोरनुकरणात् षष्ठ्येकवचनम् । वित् ज्ञानं अर्थः यस्य विदर्थः, स नभवतीति अविदर्थः । ज्ञानार्थकभिन्नस्येति यावत् । तदाह । **जानातेरज्ञानार्थस्येति** ॥ **शेषत्वेनेति** ॥ सम्बन्धत्वेनेत्यर्थः । शेष इत्यनुवृत्तेरिति भावः । **सर्पिषो ज्ञानमिति** ॥ वस्तुतः करणीभूतं यत्सर्पिः तत्सम्बन्धिनी प्रवृत्तिरित्यर्थः । अविदर्थस्येति लिङ्गादेव 'ज्ञा अवबोधने' इति धातोः प्रवृत्तौ वृत्तिः । 'षष्ठी शेषे' इति सिद्धेऽपि 'प्रतिपदविधाना षष्ठी न समस्यते' इत्येतदर्थं वचनम् । **अधीगर्थ** ॥ **एषामिति** ॥ 'इक् स्मरणे' नित्यमधिपूर्वः, तस्यार्थ इवार्थो यस्य सः अधीगर्थः, स्मरणार्थक इति यावत् । **शेष इति** ॥ 'षष्ठी शेषे' इत्यतस्तदनुवृत्तेरिति भावः । **मातुः स्मरणमिति** ॥ वस्तुतः कर्मीभूतमातृसम्बन्धि स्मरणमित्यर्थः । **सर्पिषो दयनमिति** ॥ वस्तुतः कर्मीभूतसर्पिस्सम्बन्धि दयनमित्यर्थः । 'दय दानगतिरक्षण हिंसादानेषु,' दीनान् दयते इत्यत्र दुःखाद्वियोजयितुमिच्छतीत्यर्थः । परदुःखापहरणेच्छा दया । **ईशनं वेति** ॥ सर्पिषः इत्यनुषज्यते । वस्तुतः कर्मीभूतसर्पिस्सम्बन्धियथेष्टविनियोग इत्यर्थः । इदमपि समासनिषेधार्थमेव । लोकानीष्टे इत्यत्र तु यथास्वेच्छमाज्ञापयतीत्यर्थः । **कृञः प्रति** ॥ कर्मणीति, शेष इति, चानुवर्तते । प्रतियत्नो गुणाधानम् । तदाह । **कृञः कर्मणीति** ॥ **एधोदकस्योपस्करणमिति** ॥ एधश्शब्दस्सकारान्तो नपुंसकलिङ्गः । दकशब्द उदकवाची । एधश्च दकश्चेति द्वन्द्वः । यद्वा एधशब्दः अकारान्तः पुल्लिङ्गः । एधश्च उदकश्चेति द्वन्द्वः इत्यनुपदमेवोक्तम् । वस्तुतः कर्मीभूतैधोदकसम्बन्धि परिष्करणमित्यर्थः । **रुजार्थानाम्** ॥ रुजा पीडा रोगः इत्यर्थो येषामिति विग्रहः । भाववचनानामित्येतद्व्याचष्टे । **भावकर्तृकाणामिति** ॥ वक्तीति वचनः, कर्तरि ल्युट् । प्रकृत्यर्थो न विवक्षितः । भावः धात्वर्थः वचनः कर्ता येषामिति विग्रहः । भावकर्तृकाणामिति फलितमिति भाष्ये स्पष्टम् । शेष इति कर्मणीति चानुवर्तते । तदाह । **कर्मणि शेष इति** ॥ इदमपि समासाभावार्थमेव । **चौरस्य रोगस्य रुजेति** ॥ अत्र रुजेति व्याधिकृतसन्तापादिपीडोच्यते । रोगश्चौरं सन्तापादिना

चौरस्य रोगस्य रुजा। 'अज्वरिसन्ताप्योरिति वाच्यम्' (वा १५०७)। रोगस्य चौरज्वरः, चौरसन्तापो वा। रोगकर्तृकं चौरसम्बन्धि ज्वरादिकमित्यर्थः।

## ६१६। आशिषि नाथः। (२-३-५५)

आशीरर्थस्य नाथतेः शेषे कर्मणि षष्ठी स्यात्। सर्पिषो नाथनम्। 'आशिषि' इति किम्। माणवकनाथनम्'। तत्सम्बन्धिनी याच्ञेत्यर्थः।

## ६१७। जासिनिप्रहणनाटक्राथपिषां हिंसायाम्। (२-३-५६)

हिंसार्थानामेषां शेषे कर्मणि षष्ठी स्यात्। चौरस्योज्जासनम्। निप्रौ संहतौ विपर्यस्तौ व्यस्तौ वा। चौरस्य निप्रहणनम्—प्रणिहननम्—

---

पीडयतीति पर्यवसन्नोऽर्थः। रोगकर्तृका वस्तुतः कर्मीभूतचौरगतसन्तापादिपीडेत्यत्र भावघञन्तेन रोगशब्देन शारीरक्षयादिविकारविशेषो विवक्षितः। सच रुजायां कर्ता। तत्कर्मणश्चौरस्य शेषत्वविवक्षायां षष्ठी। रोगस्य चौररुजेति समासो न भवतीति योजना। **अज्वरिसन्ताप्योरिति**॥ रुजार्थानां भाववचनानां ज्वरिसन्तापिवर्जितानाम् इति सूत्रं वक्तव्यमित्यर्थः। **रोगस्य चौरज्वरः इति**॥ अत्र चौरज्वरशब्दे शेषषष्ठ्या समासो भवत्येव। शेषषष्ठ्याः पुनर्विध्यभावात्। एवं रोगस्य चौरसन्ताप इत्यत्रापि बोध्यम्। अत्राज्वरिसन्ताप्योरित्यनुक्तौ तु रुजार्थानां भाववचनानां कर्मणि शेषे चौरशब्दात् षष्ठी स्यादित्यतिव्याप्तिं दर्शयितुमाह। **रोगकर्तृकमिति**॥ रोगकर्तृकः वस्तुतः कर्मीभूतचौरसम्बन्धी ज्वरः सन्तापो वेति यावत्। एवञ्च ज्वरिसन्ताप्योः रुजार्थकत्वात् रोगात्मकभावकर्तृकत्वाच्च तत्कर्मणश्चौरस्य शेषत्वविवक्षायां नानेन षष्ठी, किन्तु कृद्योगे षष्ठी, षष्ठी शेषे इत्येव षष्ठी वा। अतः चौरज्वरः चौरसन्ताप इति समासो भवत्येवेति भावः। **आशिषि नाथः**॥ 'शेषे कर्मणि' इति चानुवर्तते। तदाह। **आशीरर्थस्येति**॥ इदमपि समासाभावार्थमेव। **सर्पिषो नाथनमिति**॥ इदम्मे भूयादितीच्छा आशासनम्। तदेवाशीः नाथतेरर्थः। वस्तुतः कर्मीभूतसर्पिस्सम्बन्धि आशासनमित्यर्थः। **जासिनिप्र**॥ 'कर्मणि शेषे' इत्यनुवर्तते। तदाह। **हिंसार्थानामित्यादिना**॥ इदमपि समासाभावार्थमेव। **चौरस्योज्जासनमिति**॥ 'जसु ताडने' 'जसु हिंसायाम्' इति चुरादौ। वस्तुतः कर्मीभूतचौरसम्बन्धिनी हिंसेत्यर्थः। 'जसु मोक्षणे' इति दैवादिकस्य तु न ग्रहणम्। हिंसार्थत्वाभावात् जासीति निर्देशाच्च। **निप्राविति**॥ निप्रहणेति निप्रपूर्वस्य हनधातोः निर्देशः। तत्र निप्र इत्येतौ समस्तौ गृह्येते, प्रनीत्येवं व्युत्क्रमेण च गृह्येते। प्रेति नीति च पृथगपि गृह्यते, व्याख्यानादित्यर्थः। समस्तावुदाहरति। **चौरस्य निप्रहणनमिति**॥ वस्तुतः कर्मीभूतचौरसम्बन्धि हननमित्यर्थः। 'हन्तेरत्पूर्वस्य' इति णत्वम्। विपर्यस्तावुदाहरति। **प्रणिहननमिति**॥ 'नेर्गद' इति णत्वम्। हन्तेर्नकारस्य तु न णत्वम्। 'अट्कुप्वाङ्' इति नियमात्। नेर्नकारस्य तदनन्तर्भावात्। व्यस्तावुदाहरति।

निहननम्—प्रहणनं वा । 'नट अवस्कन्दने' चुरादिः । चौरस्योन्नाटनम् । चौरस्य क्राथनम् । वृषळस्य पेषणम् । 'हिंसायाम्' किम् । धानापेषणम् ।

## ६१८ । व्यवहृपणोः समर्थयोः । (२-३-५७)

शेषे कर्मणि षष्ठी स्यात् । द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थता । शतस्य व्यवहरणं, पणनं वा । 'समर्थयोः' किम् । शलाकाव्यवहारः । गणनेत्यर्थः । ब्राह्मणपणनं, स्तुतिरित्यर्थः ।

## ६१९ । दिवस्तदर्थस्य । (२-३-५८)

द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी स्यात् । शतस्य दीव्यति । 'तदर्थस्य' किम् । ब्राह्मणं दीव्यति । स्तौतीत्यर्थः ।

**निहननं प्रहणनं वेति** ॥ निमित्ताभावान्निहननमित्यत्र 'हन्तेरत्पूर्वस्य' इति णत्वं न । **चुरादिरिति** ॥ 'नट नृत्तौ' इति तु न गृह्यते । नाटेति दीर्घोच्चारणादिति भावः । **चौरस्योन्नाटनमिति** ॥ उपसर्गवशान्नाटेर्हिंसायां वृत्तिरिति भावः । **चौरस्य क्राथनमिति** ॥ 'क्रथ हिंसायाम्' इति घटादौ । 'घटादयो मितः' इति तस्य मित्त्वेऽपि 'मितां ह्रस्वः' इति न भवति । इह दीर्घनिपातनात् । **वृषळस्य पेषणमिति** ॥ हिंसेत्यर्थः । **व्यवहृपणोः** ॥ शेषपूरणेन सूत्रं व्याचष्टे । **शेषे कर्मणि षष्ठी स्यादिति** ॥ समौ तुल्यौ अर्थौ ययोरिति विग्रहः । शकन्ध्वादित्वात् पररूपम् । एकार्थकस्य व्यवपूर्वकहृञ्धातोः पणधातोश्च कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यादित्यर्थः । इदमपि समासनिवृत्त्यर्थमेव । ननु 'पण व्यवहारे स्तुतौ च' इति पणधातुः स्तुतावपि वर्तते, नतु व्यवहार एव, तत्कथमनयोरेकार्थकत्वमित्यत आह । **द्यूते इति** ॥ द्यूते अक्षैः क्रीडने क्रयविक्रयविषयकमूल्यसंवादे चानयोः व्यवहृपणोः एकार्थकत्वमित्यर्थः । तथाच एतादृशव्यवहारार्थकयोरिति फलतीति भावः । **शतस्य व्यवहरणं पणनं वेति** ॥ द्यूतव्यवहारेण क्रयविक्रयव्यवहारेण वा गृह्णातीत्यर्थः । केवलव्यवहारार्थकत्वे अकर्मकत्वापातात् । तथाच वस्तुतः कर्मीभूतशतसम्बन्धि अक्षक्रीडनेन ग्रहणं, क्रयविक्रयविषयकमूल्यविसंवादेन ग्रहणं वेत्यर्थः । **समर्थयोः किमिति** ॥ व्यवहारार्थकयोरिति किमर्थमित्यर्थः । **शलाकाव्यवहार इति** ॥ प्रत्युदाहरणे व्यवहरतेर्न व्यवहारार्थकत्वमित्याह । **गणनेत्यर्थः इति** ॥ वस्तुतः कर्मीभूतशलाकासम्बन्धिगणनेति फलितम् । अत्र षष्ठ्याः पुनर्विध्यभावादस्त्येव समास इति भावः । **ब्राह्मणपणनमिति** ॥ पणतेः प्रत्युदाहरणम् । अत्र पणिर्न व्यवहारार्थ इत्याह । **स्तुतिरित्यर्थः इति** ॥ वस्तुतः कर्मीभूतब्राह्मणसम्बन्धिनी स्तुतिरित्यर्थः । अत्रापि अस्त्येव समास इति भावः । **दिवस्तदर्थस्य** ॥ पूर्वसूत्रे निर्दिष्टव्यवहृपणौ तच्छब्देन परामृश्येते । तयोः व्यवहृपणोः अर्थ एवार्थो यस्येति विग्रहः । तदाह । **द्यूतार्थस्येति** ॥ द्यूतमक्षक्रीडनेन ग्रहणं अर्थो यस्य दिव इति विग्रहः । **क्रयेति** ॥ क्रयविक्रयविषयकमूल्यविसंवादोऽर्थः यस्य दिव इति बहुव्रीहिः । **कर्मणि षष्ठीति** ॥ इह शेष

## ६२० । विभाषोपसर्गे । (२-३-५९)

पूर्वयोगापवादः । शतस्य शतं वा प्रतिदीव्यति ।

## ६२१ । प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने । (२-३-६१)

देवतासम्प्रदानकेऽर्थे वर्तमानयोः प्रेष्यब्रुवोः कर्मणो हविषो वाचकाच्छब्दात्षष्ठी स्यात् । अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य अनुब्रूहि वा ।

## ६२२ । कृत्वोऽर्थप्रयोगे कालेऽधिकरणे । २-३-६४)

इति नानुवर्तते, व्याख्यानादिति भावः । तथाच कर्मणश्शेषत्वविवक्षाभावात् 'षष्ठी शेषे' इत्यप्राप्तौ इदं वचनम्, नतु कृदन्तयोगे समासनिवृत्त्यर्थम्, तत् ध्वनयन्नुदाहरति । **शतस्य दीव्यतीति** ॥ शतमक्षक्रीडनेन क्रयविक्रयविषयकमूल्यविसंवादेन वा गृह्णातीत्यर्थः । अत्र शेष इत्यनुवृत्तेः कर्मत्वप्रकार एव बोधः । अत एव 'द्वितीया ब्राह्मणे' इत्युत्तरसूत्रे 'ग्रामस्य तदहस्सभायां दीव्येयुः' इत्यत्र नित्यषष्ठीप्राप्तौ द्वितीयार्थमित्युक्तं भाष्यकैयटयोस्सङ्गच्छते इत्यन्यत्र विस्तरः । **विभाषोपसर्गे** ॥ उपसर्गे सति व्यवहृपणार्थस्य दिवः कर्मणि षष्ठी वा स्यादित्यर्थः । **प्रेष्यब्रुवोः** ॥ **देवतासम्प्रदानके इति** ॥ देवता सम्प्रदानं यस्य तस्मिन्नित्यर्थः । **प्रेष्यब्रुवोरिति** ॥ 'इष गतौ' दिवादिश्श्यन्नन्तः, उपसर्गवशात् प्रेरणे वर्तते । प्रेष्यश्च ब्रूश्च तयोरिति विग्रहः । **कर्मण इति** ॥ 'अधीगर्थ' इत्यतः कर्मणीत्यनुवृत्तं षष्ठ्या विपरिणम्यते इति भावः । **हविषः इति** ॥ हविश्शब्दः न स्वरूपपरः, किन्तु हविर्विशेषवाचकशब्दपरः, व्याख्यानात् । तथाच देवतासम्प्रदानक्रियावाचिनोः प्रेष्यब्रुवोः कर्मभूतः यो हविर्विशेषः तद्वाचकाच्छब्दात् षष्ठीति फलितम् । अत्रापि शेष इति नानुवर्तते, व्याख्यानात् । तथाच द्वितीयापवादोऽयम् । **अग्नये छागस्येति** ॥ मैत्रावरुणं प्रति अध्वर्युकर्तृकोऽयं सम्प्रैषः । हे मैत्रावरुण, अग्न्युद्देशेन प्रदास्यमानं छागसम्बन्धि यद्धविः वपाख्यं मेदोरूपं तत् प्रेष्य । 'होतायक्षदग्निं छागस्य वपाया मेदसो जुषतां हविर्होतर्यज' इति प्रैषेण प्रकाशयेत्यर्थः । अत्र यद्यपि 'अग्नये छागस्य वपाया मेदसः प्रेष्य' इत्येव कल्पसूत्रेषु दृश्यते, नतु हविष इत्यपि । तथापि तथाविधः प्रैषो भाष्योदाहरणात् क्वचिच्छाखायां ज्ञेयः । मेदश्शब्देन वस्त्रखण्डतुल्यो मांसविशेषः उच्यते । **अनुब्रूहि वेति** ॥ अग्नये छागस्य हविषो वपाया मेदसोऽनुब्रूहीत्युदाहरणम् । हे मैत्रावरुण, अग्न्युद्देशेन प्रदास्यमानं छागसम्बन्धि यद्धविः वपाख्यं मेदोरूप तत्पुरोऽनुवाक्यया प्रकाशयेत्यर्थः । प्रेष्यब्रुवोः किम्, अग्नये छागस्य हविर्वपां मेदो जुहुधि । हविषः किम् । अग्नये गोमयानि प्रेष्य । देवतासम्प्रदाने किम् । माणवकाय पुरोडाशं प्रेष्य । 'हविषः प्रस्थितत्वविशेषणे प्रतिषेधो वक्तव्यः' इन्द्राग्निभ्यां छागस्य हविर्वपां मेदः प्रस्थितं प्रेष्य । प्रस्थितमिति अव्यक्तमित्यर्थः । **कृत्वोऽर्थ** ॥ **कृत्वोऽर्थानामिति** ॥ कृत्वसुच्प्रत्ययस्यार्थ एवार्थः

कृत्वोऽर्थानां प्रयोगे कालवाचिन्यधिकरणे शेषे षष्ठी स्यात्। पञ्च-कृत्वोऽह्नो भोजनम्। द्विरह्नो भोजनम्। 'शेषे' किम्। द्विरहन्यध्ययनम्।

## ६२३। कर्तृकर्मणोः कृति। (२-३-६५)

कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात्। कृष्णस्य कृतिः। जगतः कर्ता कृष्णः। 'गुणकर्मणि वेष्यते' (वा ५०४२)। नेता अश्वस्य स्रुघ्नस्य—स्रुघ्नं वा। 'कृति' किम्। तद्धिते मा भूत्। कृतपूर्वी कटम्।

---

येषां ते कृत्वोऽर्थाः, तेषां प्रयोग इत्यर्थः। **शेषे षष्ठीति**॥ 'दिवस्तदर्थस्य' इत्यादिपूर्वसूत्रे विच्छिन्नमपि शेषग्रहणं मण्डूकप्लुत्या इहानुवर्तते, व्याख्यानात्। **पञ्चकृत्वोऽह्नो भोजनमिति**॥ पञ्चवारं वस्तुतः अधिकरणीभूतं यदहः तत्सम्बन्धि भोजनमित्यर्थः। 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इह षष्ठ्याश्शेषे पुनर्विधानान्न समासः। **द्विरहन्यध्ययनमिति**॥ 'द्वित्रिचतुर्भ्यस्सुच्' इति कृत्वोऽर्थे सुच्। अत्राधिकरणस्य विवक्षितत्वात्सप्तम्येव, नतु षष्ठी। **कर्तृकर्मणोः कृति**॥ कृत्प्रत्यये प्रयुज्यमाने सतीत्यर्थः। फलितमाह। **कृद्योग इति**॥ तत्र कर्तर्युदाहरति। **कृष्णस्य कृतिरिति**॥ भावे स्त्रियां क्तिन्। कृष्णकर्तृका सृष्टिरित्यर्थः। कर्मण्युदाहरति। **जगत इति**॥ जगत्कर्मकसृष्ट्यनुकूलव्यापारवानित्यर्थः। **गुणकर्मणीति**॥ कृदन्तद्विकर्मकधातुयोगे अप्रधानकर्मणि षष्ठीविकल्प इष्यत इत्यर्थः। प्रधानकर्मणि तु नित्यैव षष्ठी। 'अकथितञ्च' इत्यत्र भाष्ये स्थितमेतत्। **नेता अश्वस्येति**॥ 'अकथितञ्च' इत्यत्र 'ग्राममजान्नयति' इत्युदाहरणे अजा प्रधानं कर्म, ग्रामस्तु गुणकर्मेति प्रपञ्चितं प्राक्। तद्रीत्या अत्र अश्वः प्रधानकर्म, स्रुघ्नस्तु गुणकर्मेति ज्ञेयम्। स्यादेतत्। कृतीति व्यर्थम्। नच तिङ्व्यावृत्त्यर्थं तदिति वाच्यम्। ओदनं पचतीत्यादौ 'न लोक' इति लादेशयोगे षष्ठीनिषेधादेव षष्ठ्यभावसिद्धेः। शतेन क्रीतः शत्योऽश्वः, इत्यादौ तु तद्धितयत्प्रत्ययाभिहितत्वादेव अश्वादेः षष्ठी न भविष्यति। नच देवदत्तं हिरुगित्यादौ हिरुगाद्यवयवबोध्यवर्जनादिक्रियां प्रति कर्मत्वादनेन षष्ठी शङ्क्या। 'न लोकाव्यय' इति तन्निषेधात्। शेषत्वविवक्षायान्तु षष्ठ्यत्र इष्यत एव। एवञ्च परिशेषात् कृद्योग एवेयं षष्ठी पर्यवस्यतीति किं कृद्ग्रहणेनेति पृच्छति। **कृति किमिति**॥ उत्तरमाह। **तद्धिते इति**॥ तद्धितयोगे षष्ठीनिवृत्त्यर्थमिति यावत्। **कृतपूर्वी कटमिति**॥ कटः पूर्वं कृतः अनेनेति लौकिकविग्रहः। तत्र पूर्वमिति क्रियाविशेषणम्। 'सुप्सुपा' इति समासः। अनेनेत्यनुवृत्तौ कृतपूर्वशब्दात् 'पूर्वादिनिः' 'सपूर्वाच्च' इति इनिप्रत्ययस्तद्धितः। तत्र करोतिक्रियापेक्षया कटस्य कर्मत्वादनेन षष्ठीप्राप्तौ तद्धितयो-

---

१. अत्र च 'अथेह कथं भवितव्यम्--नेता अश्वस्य स्रुघ्नम्--इति, आहोस्वित्--नेता अश्वस्य स्रुघ्नस्य--इति। 'उभयथा गोणिकापुत्रः' इति 'अकथित—' (१-४-५१) सूत्रभाष्यमूलिक 'प्रधाने नियता षष्ठी गुणकर्मणि वेष्यते' इति शिष्टोक्तिरेव मानम्।

गान्न भवति। ननु कृतः कटः पूर्वमनेनेति विग्रहे कृतशब्दस्य पूर्वशब्देन समासो न सम्भवति। कृतशब्दस्य कटशब्दापेक्षत्वेन सामर्थ्यविरहात्। अत एव तद्धितः इनिप्रत्ययोऽपि दुर्लभः। किञ्च कृत इति क्तप्रत्ययेन कटस्य कर्मणोऽभिहितत्वेन ततष्षष्ठ्याः प्राप्तिरेव नास्तीति किं तन्निवृत्त्यर्थेन कृद्ग्रहणेन। क्तप्रत्ययेन कृता अभिहितत्वादेव कटात् द्वितीया दुर्लभेति चेत्, कृत अम् पूर्व अम् इत्यलौकिकविग्रहवाक्ये कटस्यासन्निहिततया कर्मत्वेनान्वयासम्भवेन कृञ्-धातोस्तदानीमकर्मकतया कर्मणि क्तप्रत्ययस्यासम्भवे सति 'नपुंसके भावे क्तः' इति भावे क्तप्रत्यये कृते सति कृतशब्दस्य कटशब्दसापेक्षत्वाभावात् समासतद्धितौ निर्बाधौ। ततश्च कृतपूर्वीति तद्धितान्तस्य पूर्वं कृतवानित्यर्थः पर्यवस्यति। किं कृतवानिति कर्मजिज्ञासायां कटमित्यन्वेति। गुणभूतयापि क्रियया कारकसम्बन्धस्य कटं कृतवानित्यादौ दर्शनात्। तच्च कर्मत्वं न क्तप्रत्ययेनाभिहितम्, तस्य भावे विधानात्। नापीनिप्रत्ययेन। तस्य कर्तरि विधानात्। तथाच असति कृद्ग्रहणे षष्ठी स्यात्। तन्निवृत्त्यर्थं कृद्ग्रहणमिति भाष्ये स्पष्टम्। नच निष्ठायोगे निषेधादेवात्र षष्ठी न भविष्यतीति वाच्यम्। 'नपुंसके क्ते भावे षष्ठ्या उप-सङ्ख्यानम्' इति 'क्तस्य च वर्तमाने' इति सूत्रस्थवार्तिकेन निष्ठायोगे षष्ठीनिषेधस्यात्राप्रसक्तेः। तथाच षष्ठ्यभावे उक्तरीत्या अनभिहितत्वात् द्वितीया सुलभैव। नच कृतेऽपि कृद्ग्रहणे षष्ठी दुर्वारा। कृतेति क्तप्रत्ययात्मककृद्योगस्य सत्त्वादिति वाच्यम्। कृद्ग्रहणसामर्थ्येन भाष्योदा-हरणेन च वृत्त्यन्तर्भावानापन्नकृद्योगस्य विवक्षितत्वात्। प्रकृते च कृतेत्यस्य तद्धितवृत्त्यन्त-र्भूतत्वान्न तद्योगष्षष्ठीनिमित्तम्। नचैवं सति ओदनस्य पाचकतमः, ओदनस्य पाचकग्रहणम्, इत्यादौ षष्ठी न स्यात्। वृत्त्यनन्तर्भूतकृद्योगाभावात्। तथाच ओदनं पाचकतमः, ओदनं पाचकग्रहणम्, इति द्वितीयैव स्यादिति वाच्यम्। इष्टापत्तेः। अत एव मतुब-धिकारे 'प्रज्ञाश्रद्धार्चाभ्यो णः' इत्यत्र 'प्राज्ञो व्याकरणम्' इति उदाहरिष्यते मूलकृता। नचैवं घटः क्रियते इत्यत्रापि कर्मणो विवक्षाभावमाश्रित्य भावलकारे सति अनन्तरं घटस्य कर्मत्वेनान्वयसम्भवात् अनभिहितत्वात् द्वितीया दुर्वारेति वाच्यम्। वैषम्यात्। कृत-पूर्वीत्यत्र हि अलौकिकविग्रहदशायां कटशब्दस्यासन्निधानात् कर्मणो विवक्षा न सम्भवतीति भावे क्तप्रत्यय इति युक्तमाश्रयितुम्। क्रियते इत्यत्र तु न सम्भवत्येवाविवक्षा। कृत्तद्धित-समासैकशेषसनाद्यन्तधातुरूपवृत्तिपञ्चकानन्तर्भूतत्वेन वृत्तिशून्यतया विग्रहाभावात्। तथाच वृत्तिविषय एवायं व्युत्पत्तिप्रकार इति प्राचीनमतानुसारी पन्थाः। शब्देन्दुशेखरे तु ओदनं पाचकतमः इत्यादौ द्वितीया असाधुरेव, षष्ठ्येव साधुरिति प्रपञ्चितम्। विस्तरभयान्नेह तल्लि-ख्यते। ननु भट्टिकाव्ये "ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम्। लिंपैरिव तनोर्वातै-श्चेतयस्स्यात् ज्वलो न कः॥" इति श्लोकोऽस्ति। श्रीरामस्य विरहार्तस्य वाक्यमेतत्। अत्र दुःखस्येति तनोरिति च कर्मणि षष्ठी। मादृग्भ्यो दुःखं ददैर्ददद्भिः पुष्पादीनाम् आमोदं परिमळं धायैः पोषकैः तनोः तनुं शरीरं लिंपैः लिंपद्भिः कः चेतयः प्राणी ज्वलः ज्वलन्निव न स्यादि-त्यर्थः। अत्रामोदस्योत्तमस्येति कर्मणि षष्ठ्या भाव्यम्। धायशब्दस्य पोषणार्थकधाञ्धातोः 'ददातिदधात्योः' इति णप्रत्ययात्मककृदन्तत्वादिति चेन्न। उत्तममामोदं पुष्पादीनां गृहीत्वा

## ६२४ । उभयप्राप्तौ कर्मणि । (२-३-६६)

उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात् । आश्चर्यो गवां दोहोऽगोपेन । 'स्त्रीप्रत्ययोरकाकारयोर्नायं नियमः' (वा १५१३) । भेदिका बिभित्सा वा रुद्रस्य जगतः । 'शेषे विभाषा' (वा १५१३) । स्त्रीप्रत्यये इत्येके । विचित्रा जगतः कृतिर्हरेः--हरिणा वा । 'केचिदविशेषेण विभाषामिच्छन्ति' । शब्दानामनुशासनमाचार्येण--आचार्यस्य वा ।

## ६२५ । क्तस्य च वर्तमाने । (२-३-६७)

वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात् । 'नलोक—' (सू ६२७) इति निषेधस्यापवादः । राज्ञां मतो बुद्धः पूजितो वा ।

---

दुःखस्य पोषकैरित्येवं गृहीत्वेत्यध्याहृत्य तद्योगे द्वितीयाया उपपत्तेः । **उभयप्राप्तौ कर्मणि** ॥ पूर्वसूत्रात् कृतीत्यनुवर्तते । उभयप्राप्ताविति बहुव्रीहिः । अन्यपदार्थः कृत् । तदाह । **उभयोः प्राप्तिर्यस्मिन् कृतीति** ॥ एकस्मिन् कृति उभयोः कर्तृकर्मणोः षष्ठीप्रसक्तौ कर्मण्येव षष्ठी स्यात्, नतु कर्तरीति यावत् । **आश्चर्य इति** ॥ अगोपकर्तृकः गोकर्मकः यो दोहः सः अद्भुत इत्यर्थः । उभयोः प्राप्ताविति षष्ठीसमासाश्रयणे तु ओदनस्य पाको ब्राह्मणानाञ्च प्रादुर्भाव इत्यत्रापि कर्मण्येव षष्ठी स्यान्न तु कर्तरि । बहुव्रीह्याश्रयणे तु एकस्यैव कृतो निमित्तत्वलाभात् भिन्नक्रियानिरूपितकर्तृकर्मणोः षष्ठीप्राप्तौ नायं नियम इति फलति । **स्त्रीप्रत्यययोरिति** ॥ वार्तिकमेतत् । 'स्त्रियां क्तिन्' इत्यधिकारविहितयोः अकाकारप्रत्यययोः कृतोः प्रयोगे कर्मण्येवेत्युक्तनियमो नास्तीत्यर्थः । कर्तर्यपि षष्ठी भवतीति फलितम् । **भेदिकेति** ॥ धात्वर्थनिर्देशे ण्वुल् । अकादेशः, टाप्, 'प्रत्ययस्थात्' इतीत्वम् । **बिभित्सेति** ॥ भिदेस्सन्नन्तात् 'अ प्रत्ययात्' इत्यकारप्रत्ययः, टाप्। रुद्रकर्तृकं जगत्कर्मकं भेदनं, भेदनेच्छा वेत्यर्थः । **शेषे विभाषेति** ॥ इदमपि वार्तिकम् । अकाकारप्रत्ययव्यतिरिक्तप्रत्यययोगे 'उभयप्राप्तौ' इति नियमो विकल्प्यत इत्यर्थः । **स्त्रीप्रत्यये इत्येके इति** ॥ उक्तो विकल्पः स्त्रीप्रत्यययोगे सत्येव भवतीति केचिन्मन्यन्ते इत्यर्थः । **विचित्रेति** ॥ हरिकर्तृका जगत्कर्मिका कृतिरित्यर्थः । **केचिदविशेषेणेति** ॥ अकाकारभिन्नस्त्रीप्रत्यये अस्त्रीप्रत्यये च कृति प्रयुज्यमाने उक्तविकल्प इत्यर्थः । **शब्दानामिति** ॥ आचार्यकर्तृकं शब्दकर्मकमनुशासनमित्यर्थः । अनुशासनमसाधुभ्यो विवेचनम् । **क्तस्य च वर्तमाने** ॥ ननु 'कर्तृकर्मणोः कृति' इत्येव सिद्धे किमर्थमिदमित्यत आह । **न लोकेति** ॥ **राज्ञां मतो बुद्धः पूजितो वेति** ॥ **मनुधातोः** बुधधातोः पूजधातोश्च 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तप्रत्ययः । तत्र मतिरिच्छा । बुद्धेः पृथक् ग्रहणात् । राजकर्तृकवर्तमानेच्छाविषयः राजकर्तृकवर्तमानज्ञानविषयः राजकर्तृकवर्तमानपूजाश्रय इति क्रमेणार्थः । 'पूजितो यस्सुरासुरैः, त्वया ज्ञातो घटः'

## ६२६। अधिकरणवाचिनश्च। (२-३-६८)

क्तस्य योगे षष्ठी स्यात्। इदमेषामासितं शयितं गतं भुक्तं वा।

## ६२७। न लोकाव्ययनिष्ठाखलर्थतृनाम्। (२-३-६९)

एषां प्रयोगे षष्ठी न स्यात्। लादेशः। कुर्वन्—कुर्वाणो वा सृष्टिं हरिः। उः। हरिं दिदृक्षुः—अलङ्करिष्णुर्वा। उकः। दैत्यान्घातुको हरिः। **कमेरनिषेधः।** (वा १५१९)। लक्ष्म्याः कामुको हरिः। अव्ययम्। जग-

---

इत्यत्र तु भूते क्तप्रत्ययो बोध्यः। नच 'मतिबुद्धि' इत्यनेन भूतक्तस्य बाधश्शङ्क्यः। 'तेन' इत्यधिकारे उपज्ञात इति लिङ्गात् तदबाधज्ञापनादित्याहुः। **अधिकरणवाचिनश्च॥** शेषपूरणेन सूत्रं व्याचष्टे। **क्तस्य योगे षष्ठीति॥ शयितमिति॥** शेतेऽस्मिन्निति शयितम्। 'शीङ् स्वप्ने' 'क्तोऽधिकरणे च ध्रौव्य' इति क्तप्रत्ययः। तत्र एषामिति कर्तरि षष्ठी। 'न लोक' इति निषेधापवादः। भुजेस्तु प्रत्यवसानार्थकत्वात् अधिकरणे क्तप्रत्ययः। इदमेषां भुक्तमोदनस्य, इत्यत्र तु कर्तृकर्मणोर्द्वयोरपि षष्ठी। 'उभयप्राप्तौ' इति नियमस्तु न प्रवर्तते। मध्येऽपवादन्यायेन 'कर्तृकर्मणोः कृति' इति षष्ठ्या एव तन्नियमाभ्युपगमात्। **न लोक॥ एषामिति॥** ल, उ, उक, अव्यय, निष्ठा, खलर्थ, तृन्, एषामित्यर्थः। उ, उक, इत्यत्र सवर्णदीर्घे सति ऊकेति भवति। ततः ल, ऊकेत्यत्र आद्गुणे लोकेति भवति। **लादेश इति॥** अविभक्तिकनिर्देशोऽयं लादेशोदाहरणसूचनार्थः। ल इति लडादीनां सामान्येन ग्रहणम्। तेषाञ्च साक्षात्प्रयोगाभावात् तदादेशग्रहणमिति भावः। **कुर्वन् कुर्वाणो वेति॥** लटश्शतृशानचौ। इह कर्मणि षष्ठीनिषेधात् द्वितीया। उ इत्युदाहरणसूचनमिदम्। उ इत्यनेन कृतो विशेषणात्तदन्तविधिः। **हरिं दिदृक्षुरिति॥** दृशेस्सन्नन्तात् 'सनाशंसभिक्ष उः' इति उप्रत्ययः कृत्। व्यपदेशिवत्त्वेन उकारान्तोऽयं कृत्। हरिकर्मकदर्शनेच्छावानित्यर्थः। **अलङ्करिष्णुर्वेति॥** हरिमित्यनुषज्यते। 'अलं कृञ्' इत्यादिना ताच्छील्यादाविष्णुच्। उवर्णस्यैव ग्रहणे त्वत्र निषेधो न स्यात्। **उक इति॥** इदमपि तदुदाहरणसूचनार्थम्। **दैत्यान् घातुको हरिरिति॥** 'आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' इत्यधिकारे 'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्' इति तच्छीलादिषु हनधातोः कर्तरि उकञ्प्रत्ययः, उपधावृद्धिः। 'हो हन्तेः' इति हस्य घत्वम्। "हनस्तोऽचिण्णलोः' इति नकारस्य तकारः। घातनशीलः घातनधर्मा घातनसाधुकारी वेत्यर्थः। **कमेरिति॥** वार्तिकमिदम्। उकान्तकमेर्योगे षष्ठ्या निषेधो नास्तीत्यर्थः। **लक्ष्म्याः कामुक इति॥** 'लषपत' इत्यादिना उकञ्। **अव्ययमिति॥** उदाहरणसूचनमिदम्। **जगत्सृष्ट्वेति॥** हरिरास्ते इति शेषः। 'समानकर्तृकयोः' इति क्त्वाप्रत्ययः। 'क्त्वा तोसुन्कसुनौ' इति अव्ययत्वम्। **सुखं कर्तुमिति॥** भक्तस्य हरिः प्रभवतीति शेषः। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति तुमुन्। 'कृन्मेजन्तः' इत्यव्ययत्वम्। इह कृदव्ययमेव गृह्यते

त्सृष्ट्वा । सुखं कर्तुम् । निष्ठा । विष्णुना हता दैत्याः । दैत्यान्हतवान्विष्णुः । खलर्थाः । ईषत्करः प्रपञ्चो हरिणा । 'तृन्' इति प्रत्याहारः । 'शतृशानचौ' इति तृशब्दादारभ्य तृनो नकारात् । शानन् । सोमं पवमानः । चानश् । आत्मानं मण्डयमानः । शतृ । वेदमधीयन् । तृन् । कर्ता लोकान् । 'द्विषः शतुर्वा' (वा १५२२) । मुरस्य—मुरं वा द्विषन् । 'सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः'। शेषे षष्ठी तु स्यादेव । ब्राह्मणस्य कुर्वन् । नरकस्य जिष्णुः ।

---

इति केचित् । वस्तुतस्तु अविशेषात् अकृदन्तमपीति तत्त्वम् । देवदत्तं हिरुक् । तत्कर्मकं वर्जनमित्यर्थः । **निष्ठेति** ॥ उदाहरणसूचनमिदम् । 'क्तक्तवतू निष्ठा'। **विष्णुना हता इति** ॥ अत्र भूते इति कर्मणि क्तः । कर्तरि षष्ठीनिषेधात्तृतीया । **दैत्यान् हतवानिति** ॥ भूते कर्तरि क्तवतुः । कर्मणि षष्ठीनिषेधात् द्वितीया । **खलर्था इति** ॥ उदाहरणसूचनमिदम् । **ईषत्कर इति** ॥ 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति कर्मणि खल् । अर्थग्रहणात् 'आतो युच्' इति खलर्थको युजपि गृह्यते । ईषत्पानस्सोमो भवता । ननु तृन्नित्यनेन यदि तृनेव गृह्येत, तर्हि सोमं पवमान इत्यादौ निषेधो न स्यादित्यत आह । **तृन्निति प्रत्याहारः इति** ॥ कुत आरभ्य किमन्तानामित्यत आह । **शतृशानचाविति तृशब्दादारभ्य तृनो नकारादिति** ॥ लटश्शतृशानचावित्यत्र शत्रादेशस्य एकदेशस्तृशब्दः, तत आरभ्य 'तृन्' इति सूत्रस्थनकारपर्यन्तानामित्यर्थः । 'लटश्शतृशानचावप्रथमासमानाधिकरणे, सम्बोधने च, तौ सत्, पूङ्यजोश्शानन्, ताच्छील्यवयोवचनशक्तिषु चानश्, इङ्धार्योश्शत्रकृच्छ्रिणि, द्विषोऽमित्रे, सुञो यज्ञसंयोगे, अर्हः प्रशंसायाम्, आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु, तृन्' इति सूत्रक्रमः । अत्र शानन्नादितृन्नन्तानां ग्रहणम्, नतु 'लटश्शतृ' इति तृशब्दस्यापि शत्रादेशैकदेशस्य। तस्य क्वापि पृथक् प्रयोगानर्हत्वात्। नापि शानचः। लादेशत्वादेव सिद्धेः इति स्थितिः। **शानन्निति** ॥ उदाहरणसूचनमिदम् । **सोमं पवमान इति** ॥ 'पूङ्यजोश्शानन्' । **आत्मानं मण्डयमान इति** ॥ 'मडि भूषायाम्' 'ताच्छील्यवयोवचन' इति चानश् । **शतृ इति** ॥ उदाहरणसूचनमिदम् । **वेदमधीयन्निति** ॥ 'इङ्धार्योः' इति शतृप्रत्ययः । **तृन्निति** ॥ उदाहरणसूचनमिदम् । **कर्ता लोकानिति** ॥ तृन्निति सूत्रेण तच्छीलादिषु तृन्प्रत्ययः । शानन्नादितृन्नन्तानां लादेशत्वाभावात् प्रत्याहाराश्रयणमिति बोध्यम् । **द्विषश्शतुर्वेति** ॥ शत्रन्तद्विषधातुयोगे षष्ठीनिषेधो वा वक्तव्य इत्यर्थः । **मुरस्य मुरं वा द्विषन्निति** ॥ 'द्विषोऽमित्रे' इति शतृप्रत्ययः । तस्य तृन्प्रत्याहारप्रविष्टत्वान्नित्यनिषेधे प्राप्ते विकल्पोऽयम् । **सर्वोऽयमिति** ॥ 'अनन्तरस्य' इति न्यायादिति भावः । **शेषे षष्ठी त्विति** ॥ शाब्दबोधे प्रकारवैलक्षण्यं फलमिति भावः । **ब्राह्मणस्य कुर्वन्निति** ॥ हविरिति शेषः । लटश्शत्रादेशः । मुखतो ब्राह्मणसम्बन्धिसृष्ट्यनुकूलव्यापारवानित्यर्थः । कर्मत्वविवक्षायान्तु द्वितीयैव । **नरकस्य जिष्णुरिति** ॥ 'ग्लाजिस्थश्च ग्स्नुः' इति तच्छीलादिषु ग्स्नुप्रत्ययः । नरकसम्बन्धिजयवानित्यर्थः । कर्मत्वविवक्षायान्तु द्वितीयैव ।

## ६२८ । अकेनोर्भविष्यदाधमर्ण्ययोः । (२-३-७०)

भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात् । सतः पालकोऽवतरति । व्रजं गामी । शतं दायी ।

## ६२९ । कृत्यानां कर्तरि वा । (२-३-७१)

षष्ठी वा स्यात् । मया—मम वा सेव्यो हरिः । 'कर्तरि' इति किम् । गेयो माणवकः साम्नाम् । 'भव्यगेय—' (सू २८९४) इति कर्तरि यद्विधानादनभिहितं कर्म । अत्र योगो विभज्यते । 'कृत्यानाम्' 'उभयप्राप्तौ'

---

**अकेनोर्भविष्य** ॥ नेत्यनुवर्तते । अकश्च इन् च तयोरिति विग्रहः । भविष्यच्च आधमर्ण्यञ्च तयोरिति द्वन्द्वः । यथासङ्ख्यं नेष्यते, भाष्यात् । भविष्यति आधमर्ण्ये च वर्तमानयोः योगे षष्ठी नेति फलितम् । तत्र आधमर्ण्यांशः अकेन नान्वेति । 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्युक्तेः । अतः भविष्यदंश एवाके अन्वेति । इनेस्तु भविष्वदाधमर्ण्ययोरुभयोरप्यन्वयः । सम्भवात् । तदाह । **भविष्यत्यकस्येति** ॥ **भविष्यदाधमर्ण्यार्थेनश्चेति** ॥ भविष्यदर्थकस्य आधमर्ण्यार्थकस्य चेन इत्यर्थः । **सतः पालकः इति** ॥ सज्जनान् पालयिष्यन् हरिः प्रादुर्भवतीत्यर्थः । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति भविष्यति ण्वुल् । तत्र 'भविष्यति गम्यादयः' इत्यतः भविष्यतीत्यनुवृत्तेः । ओदनस्य पाचकः इत्यत्र तु न षष्ठीनिषेधः । 'ण्वुल्तृचौ' इत्यस्य भविष्यति विधानाभावात् । **व्रजं गामीति** ॥ 'गमेरिनिः' इत्यौणादिक इनिः । स च भविष्यति विहितः । 'भविष्यति गम्यादयः' इत्युक्तेः । गोष्ठं गमिष्यन्नित्यर्थः । **शतं दायीति** ॥ ऋणत्वेन गृहीतं शतमृणं प्रत्यर्पयतीत्यर्थः । 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्याधमर्ण्ये णिनिः । तस्य भविष्यति विधानाभावात् भविष्यदर्थकतया गतार्थत्वं न शङ्क्यम् । **कृत्यानाम्** ॥ शेषपूरणेन सूत्रं व्याचष्टे । **षष्ठी वा स्यादिति** ॥ कृत्या इत्यधिकृत्य विहिताः कतिपयकृत्प्रत्ययविशेषाः, तद्योगे कर्तरि षष्ठी वा स्यादित्यर्थः । 'कर्तृकर्मणोः' इति नित्यं प्राप्ते विकल्पोऽयम् । **मया मम वा सेव्यो हरिरिति** ॥ 'षेवृ सेवायाम्' 'ऋहलोर्ण्यत्' इति कर्मणि ण्यत्प्रत्ययः । अस्मच्छब्दार्थस्य कर्तुः अनभिहितत्वात् षष्ठीतृतीये । **गेय इति** ॥ नन्विह साम्नः कर्मत्वस्य 'अचो यत्' इति यत्प्रत्ययाभिहितत्वात् कथं षष्ठीप्रसक्तिरित्यत आह । **भव्येति** ॥ ननु 'नेतव्या व्रजं गावः कृष्णेन' इत्यत्र कृत्यसंज्ञकतव्यप्रत्यययोगात् 'उभयप्राप्तौ' इति बाधित्वा कृष्णात् षष्ठीविकल्पस्स्यात्, व्रजात्तु 'कर्तृकर्मणोः कृति' इति नित्यं षष्ठी स्यादित्यत आह । **अत्र योगो विभज्यते इति** ॥ विभागप्रकारं दर्शयति । **कृत्यानामिति** ॥ **अनुवर्तते इति** ॥ तथाच कृत्ययोगे कर्तृकर्मणोरुभयोः प्रसक्ता षष्ठी नेत्यर्थः फलति । **नेतव्या व्रजमिति** ॥ 'गुणकर्मणि वेष्यते' इति व्रजाद्विकल्पस्तु न भवति । नेता अश्वस्य स्रुघ्नस्य स्रुघ्नं वेति उभयप्राप्तिरहिते कृत्यव्यतिरिक्ते चरितार्थस्य 'दोग्धव्याः गाः पयः कृष्णेन' इत्यादौ गुणकर्मणः

इति 'न' इति चानुवर्तते । तेन नेतव्या व्रजं गावः कृष्णेन । ततः 'कर्तरि वा' उक्तोऽर्थः ।

### ६३० । तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् । (२-३-७२)

तुल्यार्थैर्योगे तृतीया वा स्यात्पक्षे षष्ठी । तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा । अतुलोपमाभ्यां किम् । तुला उपमा वा कृष्णस्य नास्ति ।

### ६३१ । चपुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः । (२-३-७३)

एतदर्थैर्योगे चतुर्थी वा स्यात्पक्षे षष्ठी । आशिषि, आयुष्यं चिरञ्जीवितं कृष्णाय—कृष्णस्य वा भूयात् । एवं मद्रं भद्रं कुशलं निरामयं सुखं शम् अर्थः प्रयोजनं हितं पथ्यं वा भूयात् । 'आशिषि' किम् । देवदत्तस्यायुष्यमस्ति । व्याख्यानात्सर्वत्रार्थग्रहणम् । मद्रभद्रयोः पर्यायत्वादन्यतरो न पठनीयः ॥

इति षष्ठी विभक्तिः ।

---

उक्तत्वेन प्रधानकर्मणि चरितार्थेनानेन परत्वात् बाधात् । **ततः कर्तरि वेति** ॥ 'कृत्यानाम्' इति सूत्रप्रणयनानन्तरं कर्तरि वेति पृथक् प्रणेतव्यमित्यर्थः । **उक्तोऽर्थः इति** ॥ 'कृत्यानाम्' इत्यनुवर्त्य कृत्ययोगे कर्तरि षष्ठी वा स्यादिति व्याख्येयमित्यर्थः । अनुभयप्राप्तिविषये मया मम वा सेव्यो हरिरित्यादाविदमवतिष्ठते । अथोपपदविभक्तयः । **तुल्यार्थैः** ॥ शेषषष्ठ्यां नित्यं प्राप्तायां तृतीयाविकल्पोऽयम् । तुल्यैरिति बहुवचनादेव पर्यायग्रहणे सिद्धे अर्थग्रहणं पदान्तरनिरपेक्षश्चेत्तुल्यार्थस्तेषां ग्रहणार्थम् । तेन गौरिव गवय इत्यादौ नेत्याहुः । अतुलोपमाभ्यामिति पर्युदासात् अनव्ययोग एवेदमित्यन्ये । **चतुर्थी च** ॥ **एतदर्थैरिति** ॥ आयुष्य, मद्र, भद्र, कुशल, सुख, अर्थ, हित, एतदर्थकैरित्यर्थः । **पक्षे षष्ठीति** ॥ चकारेण तत्समुच्चयावगमादिति भावः । आयुष्यपर्यायश्चिरञ्जीवितमिति । कुशलं निरामयमिति मद्रभद्रपर्यायौ । शमिति सुखपर्यायः । प्रयोजनमित्यर्थपर्यायः । पथ्यमिति हितपर्यायः । 'हितयोगे च' इति नित्यचतुर्थी तु नाशिषि ज्ञेया । ननु 'स्वं रूपम्' इति परिभाषया आयुष्यादिशब्दानामेव ग्रहणमुचितमित्यत आह । **व्याख्यानादिति** ॥ ननु मद्रभद्रयोः पृथग्ग्रहणादेतदर्थैरिति व्याख्यानमयुक्तमित्यत आह । **मद्रभद्रयोरिति** ॥

इति षष्ठी विभक्तिः ।

## अथ सप्तमी विभक्तिः।

### ६३२। आधारोऽधिकरणम्। (१-४-४५)

कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञः स्यात्।

### ६३३। सप्तम्यधिकरणे च। (२-३-३६)

अधिकरणे सप्तमी स्यात्, चकाराद्दूरान्तिकार्थेभ्यः। औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा। कटे आस्ते। स्थाल्यां पचति। मोक्षे इच्छास्ति। सर्वस्मिन्नात्मास्ति। वनस्य दूरे अन्तिके वा। दूरान्तिकार्थेभ्यः—' (सू ६०५) इति विभक्तित्रयेण सह चतस्रोऽत्र विभक्तयः

---

अथ सप्तमी विभक्तिः—**आधारोऽधिकरणम्**॥ कारके इत्यधिकृतं प्रथमान्ततया विपरिणम्यते, तच्च आधारस्य विशेषणम्, आधारः कारकमधिकरणमिति लभ्यते। क्रियान्वयि कारकम्। एवञ्च कस्याधार इत्याकाङ्क्षायाम् उपस्थिततत्वात् क्रियाया इति लभ्यते। क्रिया च कर्तृकर्मगता विवक्षिता। तदाधारत्वञ्च न साक्षात्, किन्तु कर्तृकर्मद्वारैव। व्याख्यानात्। तदाह। **कर्तृकर्मद्वारेति ॥ तन्निष्ठेति ॥** कर्तृकर्मनिष्ठेत्यर्थः। **सप्तम्यधिकरणे च ॥ चकाराद्दूरेति ॥** 'दूरान्तिकार्थेभ्यो द्वितीया च' इति पूर्वसूत्रात् दूरान्तिकार्थेभ्य इत्यस्य चकारेणानुकर्षणादिति भावः। **औपश्लेषिक इति ॥** उपश्लेषस्संयोगादिसम्बन्धः। तत्प्रयोज्य आधारः प्रथम इत्यर्थः। **वैषयिक इति ॥** विषयतासम्बन्धकृत आधारः द्वितीय इत्यर्थः। **अभिव्यापक इति ॥** सकलावयवव्याप्तिकृत आधारस्तृतीय इत्यर्थः। तत्र औपश्लेषिकं कर्तृद्वारकमाधारमुदाहरति। **कटे आस्ते इति ॥** देवदत्त इति शेषः। तत्र साक्षाद्देवदत्तात्मककर्तृगतामासनक्रियां प्रति कटस्य संयोगसम्बन्धं पुरस्कृत्य देवदत्तद्वारा तदाधारत्वादधिकरणत्वम्। अथ कर्मद्वारकमौपश्लेषिकमाधारमुदाहरति। **स्थाल्यां पचतीति ॥** तण्डुलानिति शेषः। अत्र साक्षात्तण्डुलात्मककर्मगतां पाकक्रियां प्रति स्थाल्यास्संयोगसम्बन्धं पुरस्कृत्य तण्डुलद्वारा आधारत्वादधिकरणत्वम्। रूपे रूपत्वमस्ति, शरीरे चेष्टास्तीत्यादौ समवायेन औपश्लेषिकमाधारत्वमित्यादि ज्ञेयम्। अथ वैषयिकमाधारमुदाहरति। **मोक्षे इच्छास्तीति ॥** अत्र कर्तृभूतेच्छागतां सत्ताक्रियां प्रति मोक्षस्य विषयतासम्बन्धपुरस्कारेण इच्छाधारत्वादधिकरणत्वम्। अथाभिव्यापकमाधारमुदाहरति। **सर्वस्मिन्नात्मास्तीति ॥** अत्र आत्मरूपकर्तृगतां सत्ताक्रियां प्रति कृत्स्नव्याप्तिं पुरस्कृत्य आत्मद्वारा सत्ताधारत्वात्सर्वस्याधिकरणत्वम्। अथ चकारानुकृष्टदूरान्तिकार्थेभ्यः उदाहरति। **वनस्य दूरे अन्तिके वेति ॥** दूरमन्तिकमित्यर्थः। प्रातिपदिकार्थमात्रे विधिरयम्। **विभक्तित्रयेणेति ॥** द्वितीयापञ्चमीतृतीयाभिरित्यर्थः। वस्तुतस्तु उप समीपे श्लेषः सम्बन्धः तत्कृतमौपश्लेषिकमिति व्युत्पत्त्या सामीपिकमेवाधारत्वमौपश्लेषिकम्। "अत एव अधिकरणन्नाम त्रिप्रकारम्। व्यापकमौपश्लेषिकं वैषयिकमिति,

फलिता: । 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' (वा १४८५)। अधीती व्याकरणे । अधीतमनेनेति विग्रहे 'इष्टादिभ्यश्च' (सू १८८८) इति कर्तरीनि: । 'साध्वसाधुप्रयोगे च' (वा १४८६)। साधु: कृष्णो मातरि, असाधुर्मातुले । 'निमित्तात्कर्मयोगे' (वा १४९०)। निमित्तमिह फलम् । योग: संयोगसमवायात्मक: ।

---

शब्दस्य तु शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हति अन्यदत उपश्लेषात् । 'इको यणचि' अच्युपश्लिष्टस्य" इति संहितायाम् इत्यत्र भाष्यं सङ्गच्छते। अच्युपश्लिष्टस्य अच्समीपोच्चारितस्येत्यर्थ इति कैयट:। अत एव मासेऽतिक्रान्ते दीयत इत्यत्र मास औपश्लेषिकमधिकरणमिति 'तत्र च दयिते कार्यं भववत्' इत्यत्र भाष्यं सङ्गच्छते। अत एव च 'तदस्मिन्नधिकम् इति दशान्ताड्ड:' इत्यत्र एकादश माषा अधिका अस्मिन् कार्षापणशते इत्यत्राधिकानां एकादशानां कथं शतमधिकरणमित्याक्षिप्य व्यापकवैषयिकाधिकरणासम्भवात् औपश्लेषिकमधिकरणं विज्ञायत इति भाष्यं सङ्गच्छते। एवञ्च 'कटे आस्ते' इत्यादौ औपश्लेषिकाधारोदाहरणम्मूलोक्तमनुपपन्नमेव। उक्तभाष्यविरोधात्। एवञ्च 'कटे आस्ते' इत्यादौ एकदेशव्याप्तया गौणमभिव्यापकाधारत्वम् । सर्वावयवव्याप्तिकृताधिकरणत्वमेव मुख्यम्, वैषयिकमौपश्लेषिकञ्च गौणमित्यर्थस्य भाष्यसम्मतत्वात्। अत एव 'स्वरितेनाधिकार:' इति सूत्रे 'साधकतमं करणम्' इति सूत्रे च भाष्ये "अधिकरणमाचार्य: किं मन्यते? यत्र कृत्स्नमाधारात्माव्याप्तो भवति, तर्हि इहैव सप्तमी स्यात्, 'तिलेषु तैलं, दध्नि सर्पि:' इति 'गङ्गायां घोष:, कूपे गर्गकुलम्' इत्यत्र तु न स्यात्। मुख्य एव कार्यसम्प्रत्ययादित्याशङ्क्य स्वरितेनाधिकं कार्यं भवतीति वचनात् तमब्ग्रहणाच्च न दोष:" इति समाहितम्। एवञ्च 'कटे आस्ते, गङ्गायां घोष:' इत्यादौ गौणमप्यधिकरणं सप्तम्यर्थ एव। यदि तु 'गङ्गायां घोष:' इत्यादौ सामीपिकं अधिकरणत्वन्न विवक्ष्यते तदा लक्षणेति बोध्यम् । विस्तरस्तु शब्देन्दुशेखरे द्रष्टव्य: । **क्तस्येन्विषयस्येति** ॥ न च 'कृतपूर्वी कटम्' इत्यत्रापि सप्तमी शङ्क्या । इन्प्रत्ययान्त: य: क्तप्रत्ययान्त: तस्य कर्मणीत्यर्थाभ्युपगमात् । **कर्तरीनिरिति** ॥ भावक्तान्तात् अधीतशब्दात् कर्तरीनिप्रत्यये कृते अधीतीत्यस्याधीतवानित्यर्थ: पर्यवस्यति । किम् अधीतवानिति कर्मविशेषजिज्ञासायां व्याकरणम् अध्ययने कर्मत्वेनान्वेति। तच्च व्याकरणकर्मत्वन्न केनाप्यभिहितमिति कृतपूर्वी कटम्, इतिवत् द्वितीयायां प्राप्तायामनेन सप्तमीति भाव:। **साध्वसाधुप्रयोगे चेति** ॥ सप्तमी वक्तव्येति शेष: । **साधुरिति** ॥ हितकारीत्यर्थ:। **असाधुरिति** ॥ अहितकारीत्यर्थ: । उभयत्र शेषषष्ठ्यपवाद: । 'साधुनिपुणाभ्यामर्चायाम्' इत्येव सिद्धे इह साधुग्रहणमनर्चार्थम् । यथा साधुर्भृत्यो राजनि। इह तत्त्वकथने तात्पर्यम् । साधुनिपुणाभ्यामित्यत्र साधुग्रहणस्य प्रयोजनं वक्ष्यते । **निमित्तादिति** ॥ कर्मयोगे हेतुवाचकाच्छब्दात् सप्तमी वाच्येत्यर्थ: । ननु 'जाड्येन बद्ध:' इत्यत्रापि सप्तमी स्यादित्यत आह । **निमित्तमिह फलमिति** ॥ फलमेवेत्यर्थ: । इष्टसाधनताज्ञानस्य प्रवर्तकतया फलस्यापि हेतुत्वं बोध्यम् । जन्यजनकत्वादिसम्बन्धं व्यावर्तयितुमाह । **योग:**

'चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥' [इति भाष्यम् ।]

हेतौ तृतीयात्र प्राप्ता । सीमा अण्डकोशः । पुष्कलको गन्धमृगः । 'योगविशेषे' किम् । वेतनेन धान्यं लुनाति ।

## ६३४ । यस्य च भावेन भावलक्षणम् । (२-३-३७)

यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात् । गोषु दुह्यमानासु गतः । 'अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च' (वा १४८७–१४८८) । सत्सु तरत्सु असन्त आसते । असत्सु तिष्ठत्सु सन्तस्तरन्ति । सत्सु तिष्ठत्सु असन्तस्तरन्ति । असत्सु तरत्सु सन्तस्तिष्ठन्ति ।

---

**संयोगसमवायात्मक इति** ॥ अयुतसिद्धयोस्सम्बन्धस्समवायः । अन्ययोस्तु संयोगः । **चर्मणीति** ॥ चर्मार्थे व्याघ्रं हन्तीत्यर्थः । अत्र द्वीपिना कर्मणा चर्मणः समवाय एव । अवयवावयविनोरयुतसिद्धत्वात् । **दन्तयोरिति** ॥ दन्तार्थमित्यर्थः । अत्र कुञ्जरेण कर्मणा दन्तयोस्समवाय एव । **केशेष्विति** ॥ केशार्थमित्यर्थः । चमरी मृगविशेषः । **सीम्नीति** ॥ सीमार्थमित्यर्थः । **हेतुतृतीया प्राप्तेति** ॥ तादर्थ्यचतुर्थ्यपीति बोध्यम् । **सीमा अण्डकोशः इति** ॥ "सीमा घट्टस्थितिक्षेत्रेष्वण्डकोशेषु च स्त्रियाम्" इति मेदिनी । **पुष्कलको गन्धमृगः इति** ॥ "अथ पुष्कलको गन्धमृगे क्षेपणकीलयोः" इति मेदिनी । अत्रापि पुष्कलकेन कर्मणा सीम्नस्समवाय एव । हरदत्तस्तु सीमा ग्रामादिमर्यादा । तस्याः ज्ञानार्थं पुष्कलकश्शङ्कुर्हतः निखात इति व्याचष्ट । अत्र पुष्कलकेन कर्मणा सीम्नस्संयोगो बोध्यः । **वेतनेनेति** ॥ अत्र वेतनं भृतिद्रव्यम्, तदर्थमित्यर्थः । अत्र वेतनस्य लूयमानस्य धान्यस्य च तादर्थ्यमेव सम्बन्धः, नतु संयोगः, नापि समवायः, इति भावः । **यस्य च** ॥ भावशब्दौ क्रियापर्यायावित्यभिप्रेत्य व्याचष्टे । **यस्य क्रिययेति** ॥ क्रिया च कर्त्राश्रया कर्माश्रया च । तत्र कर्माश्रयमुदाहरति । **गोष्विति** ॥ देवदत्तः कदा गत इति प्रश्ने उत्तरमिदम् । अत्र लक्षकत्वसम्बन्धे सप्तमी । शेषषष्ठ्यपवादः । वर्तमानदोहनविशिष्टाभिर्गोभिर्ज्ञाप्यगमनवानित्यर्थः । अत्र दोहनक्रियायाः साक्षाल्लक्षकता । गवान्तु तदाश्रयतया । ततश्च गोदोहनदशायां गत इत्युत्तरं पर्यवस्यति । दुग्धासु गत इत्यत्र तु अतीतदोहनविशिष्टाभिः गोभिर्ज्ञाप्यमानगमनवानित्यर्थः । गोदोहोत्तरकाले गत इति फलितम् । कर्तृगतक्रियायास्तु ब्राह्मणेष्वधीयानेषु गत इत्युदाहार्यम् । अत्र यदवश्यं पुनः पुनर्लक्ष्यज्ञापकं तदेव न लक्षणम् । किन्तु सकृत् ज्ञापकमपि । यथा । यं कमण्डलुपाणिं भवानद्राक्षीत् स च्छात्र इति । यद्यपि सकृदसौ कमण्डलुपाणिर्दृष्टः । तथापि तस्य कमण्डलुर्लक्षणं भवत्येवेति प्रकृतसूत्रे भाष्ये स्पष्टम् । 'उदिते आदित्ये जुहोति' इत्यत्र तु सामीपिकमधिकरणत्वं सप्तम्यर्थः । उदितादित्यसमीपकाल इत्यर्थः । आदित्योदयोत्तरसमीपकाल इति पर्यवसन्नोऽर्थः । 'उपरागे स्नायात्' इत्यत्र तु उपरागपदेन उपरागाश्रय-

## ६३५ । षष्ठी चानादरे । (२-३-३८)

अनादराधिके भावलक्षणे षष्ठीसप्तम्यौ स्तः । रुदति रुदतो वा प्राव्राजीत् । रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः ।

## ६३६ । स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च । (२-३-३९)

एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः । षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थं वचनम् । गवां–गोषु वा स्वामी । गवां–गोषु वा प्रसूतः । गा एवानुभवितुं जात इत्यर्थः ।

## ६३७ । आयुक्तकुशलाभ्यां चासेवायाम् । (२-३-४०)

आभ्यां योगे षष्ठीसप्तम्यौ स्तस्तात्पर्येऽर्थे । आयुक्तो व्यापारितः । आयुक्तः–कुशलो वा हरिपूजने–हरिपूजनस्य वा । 'आसेवायाम्' किम् । आयुक्तो गौः शकटे । ईषद्युक्त इत्यर्थः ।

---

कालो लक्ष्यत इत्यधिकरणसप्तम्येवेत्यन्यत्र विस्तरः। **षष्ठी चानादरे** ॥ चात्सप्तमीत्यनुकृष्यते । अनादरे इति विषयसप्तमी । 'यस्य च' इति पूर्वसूत्रमनुवर्तते । अनादरे गम्यमाने सति यस्य क्रियया क्रियान्तरं लक्ष्यते ततः षष्ठी सप्तमी चेत्यर्थः । फलितमाह । **अनादराधिके इति** ॥ अनादरो अधिको यस्मादिति विग्रहः । **रुदति रुदत इति** ॥ कदा सन्न्यस्तवानिति प्रश्ने उत्तरमिदम् । अत्र लक्षकत्वं षष्ठीसप्तम्योरर्थः । अनादरविशिष्टं प्रव्रजनं धात्वर्थः । षष्ठीसप्तम्यौ तात्पर्यग्राहिके । अनादरश्च लक्षकक्रियाश्रयपुत्रादिविषयः । वर्तमानरोदनक्रियाविशिष्टपुत्रादिज्ञाप्यं प्रव्रजनमित्यर्थः। फलितमाह। **रुदन्तं पुत्रादिकमिति** ॥ **स्वामीश्वर** ॥ **षष्ठी सप्तम्याविति** ॥ चकारेण तदुभयानुकर्षणादिति भावः । ननु शेषषष्ठ्यैव सिद्धे किमर्थमिह षष्ठीविधानमित्यत आह । **षष्ठ्यामेवेति** ॥ **गवां गोषु वेति** ॥ गोसम्बन्धीत्यर्थः । गवां गोषु वा ईश्वरः । गवां गोषु वा अधिपतिः । गवां गोषु वा दायादः । पुत्रादिभिर्ग्रहीतुं योग्यः पित्राद्यार्जितधनांशो दायः । तमादत्ते इति दायादः । 'आतश्चोपसर्गे' इति अङ्विधौ उपसर्गग्रहणे सत्यपि अत एव निपातनात् कः । गोसम्बन्धिदायाद इत्यर्थः । गवाञ्च दाये अन्वयः । नित्यसाकाङ्क्षत्वाद्वृत्तिः । गवात्मकस्यांशस्य आदातेति फलितोऽर्थः । 'यस्मादधिकम्' इति सूत्रभाष्ये तु दायादशब्दः स्वामिपर्याय इति स्थितम् । **गवां गोषु वा प्रसूत इति** ॥ गोसम्बन्धीत्यर्थः । सम्बन्धश्च भोक्तृत्वरूपः । तदाह । **गा एवेति** ॥ एवशब्दात् महिषादिव्यावृत्तिः। **आयुक्त** ॥ आसेवापदं व्याचष्टे । **तात्पर्ये इति** ॥ औत्सुक्ये इत्यर्थः । 'तत्परे प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः' इत्यमरः। आयुक्तपदं व्याचष्टे। **व्यापारित इति** ॥ प्रवर्तित इत्यर्थः। **आयुक्तः कुशलो वेति** ॥ हरिपूजनविषये आयुक्तः प्रवर्तित इत्यर्थः। अत्र वैषयिकाधिकरणत्वविवक्षायां सप्तम्यामेव प्राप्तायां सम्बन्धमात्रविवक्षायां तु षष्ठ्यामेव प्राप्तायां वचनम्। **आयुक्तो**

## ६३८ । यतश्च निर्धारणम् । (२-३-४१)

जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणं यतस्ततः षष्ठीसप्तम्यौ स्तः । नृणां—नृषु वा ब्राह्मणः श्रेष्ठः । गवां—गोषु वा कृष्णा बहुक्षीरा । गच्छतां—गच्छत्सु वा धावञ्छीघ्रः । छात्राणां--छात्रेषु वा मैत्रः पटुः ।

## ६३९ । पञ्चमी विभक्ते । (२-३-४२)

विभागो विभक्तं निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात् । माधुराः पाटलिपुत्रकेभ्य आढ्यतराः ।

## ६४० । साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः । (२-३-४३)

---

**गौरिति** ॥ आङीषदर्थे । 'युजिर्योगे' । तदाह । **ईषद्युक्त इत्यर्थ इति** ॥ **यतश्च निर्धारणम्** ॥ **जातिगुणेति** ॥ यत इति तत इति च पञ्चम्यर्थे तसिः । यस्मात्समुदायात् एकदेशस्य जातिगुणक्रियासंज्ञाभिः पृथक्करणं स्वेतरव्यावृत्तधर्मविशेषवत्त्वबोधनं निर्धारणशब्दवाच्यं गम्यते तस्मात् षष्ठीसप्तम्यावित्यर्थः । अत्र स्वशब्देन एकदेश उच्यते । तत्र जात्या पृथक्करणमुदाहरति । **नृणां नृषु वेति** ॥ नृशब्दो मनुष्यसमुदाये वर्तते । उद्भूतावयवभेदविवक्षायां बहुवचनम् । द्विज इति तु जात्यभिप्रायमेकवचनम् । षष्ठीसप्तम्योः अवयवावयविभावस्सम्बन्धोऽर्थः उदाहृतनिर्धारणविषयत्वरूपश्च । ततश्च मनुष्यसमुदायैकदेशभूतो द्विजः स्वेतरव्यावृत्तश्रैष्ठ्यरूपधर्मक इत्यर्थः । गुणेन पृथक्करणमुदाहरति । **गवां गोषु वेति** ॥ गोसमुदायैकदेशभूता कृष्णा गौः स्वेतरव्यावृत्तबहुक्षीरत्वरूपधर्मिकेत्यर्थः । क्रियया पृथक्करणमुदाहरति । **गच्छतां गच्छत्सु वेति** ॥ गच्छत्समुदायैकदेशभूतो धावन् स्वेतरव्यावृत्तशैघ्र्यधर्मक इत्यर्थः । संज्ञया पृथक्करणमुदाहरति । **छात्राणामिति** ॥ छात्रसमुदायैकदेशभूतो मैत्रनामा स्वेतरव्यावृत्तपटुत्वधर्मक इत्यर्थः । **पञ्चमी विभक्ते** ॥ **विभागो विभक्तमिति** ॥ भावे क्तप्रत्ययाश्रयणादिति भावः । 'यतश्च निर्धारणम्' इत्यनुवर्तते । निर्धारणावधिभूतानां मनुष्यादीनां निर्धार्यमाणानां द्विजातीनाञ्च सामान्यात्मना अभेदो विशेषात्मना भेदश्च स्थितः । एवञ्च निर्धारणे सर्वत्र कथञ्चिद्भेदस्य सत्त्वात् विभक्त इत्यनेन भेद एवेत्यर्थो विवक्षितः । ततश्च यत्र निर्धारणावधेर्निर्धार्यमाणस्य च भेद एव, नतु केनाप्युपात्तरूपेण अभेदः, तत्रैवास्य प्रवृत्तिरित्यभिप्रेत्य आह । **निर्धार्यमाणस्येति** ॥ निर्धारणावधेरिति शेषः । 'यतश्च निर्धारणम्' इत्यनुवृत्तेः । अत्रावधिव्यावृत्तधर्मवत्त्वबोधनमेव, नतु समुदायादेकदेशस्येत्यंशो विवक्षितः । असम्भवादित्यभिप्रेत्योदाहरति । **माधुरा इति** ॥ अवधित्वं पञ्चम्यर्थः । मधुरादेशीयाः पाटलीपुत्रकदेशीयापेक्षया अतिशयेनाढ्या इत्यर्थः । अत्र मधुरादेशीयत्वपाटलीपुत्रकदेशीयत्वयोः गोत्वाश्वत्ववद्विरोधात् कथञ्चिदपि तद्रूपेण नाभेद इति निर्धारणावधेः पञ्चमीति भावः । **साधुनिपुणाभ्याम्** ॥ शेषषष्ठ्यपवादः । **मातरि साधुरिति** ॥ हितकारीत्यर्थः ।

आभ्यां योगे सप्तमी स्यादर्चायाम्, नतु प्रतेः प्रयोगे । मातरि साधुर्निपुणो वा । 'अर्चायाम्' किम् । निपुणो राज्ञो भृत्यः । इह तत्त्वकथने तात्पर्यम् । 'अप्रत्यादिभिरिति वक्तव्यम्' (वा १४९३) । साधुर्निपुणो वा मातरं प्रति परि अनु वा ।

## ६४१ । प्रसितोत्सुकाभ्यां तृतीया च । (२-३-४४)

आभ्यां योगे तृतीया स्याच्चात्सप्तमी । प्रसित उत्सुको हरिणा--हरौ वा ।

## ६४२ । नक्षत्रे च लुपि । (२-३-४५)

नक्षत्रे प्रकृत्यर्थे यो लुप्संज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमाना-त्तृतीयासप्तम्यौ स्तोऽधिकरणे । 'मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्' । मूले श्रवणे इति वा । 'लुपि' किम् । पुष्ये शनिः ।

## ६४३ । सप्तमीपञ्चम्यौ कारकमध्ये । (२-३-७)

शक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यामेते स्तः । अद्य भुक्त्वायं द्व्यहे—द्व्यहाद्वा भोक्ता । कर्तृशक्त्योर्मध्येऽयं कालः । इहस्थोऽयं क्रोशे—क्रोशाद्वा

**निपुणो वेति** ॥ मातरि कुशल इत्यर्थः । शुश्रूषायामिति शेषः । **निपुणो राज्ञ इति** ॥ साधुशब्दप्रयोगे तु अर्चां विनापि सप्तमी भवत्येव । 'साध्वसाधुप्रयोगे च' इत्युक्तेः । इह साधुग्रहणन्तु अर्चायां प्रत्यादियोगे सप्तमीनिवृत्त्यर्थम् । **अप्रत्यादिभिरिति** ॥ प्रति, परि, अनु, एतैर्योगे सति साधुनिपुणाभ्यां योगेऽपि न सप्तमीति भावः । **प्रसितोत्सुकाभ्याम्** ॥ 'तत्परे प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः' इत्यमरः । वैषयिकाधिकरणत्वे सप्तम्यामेव प्राप्तायामिदं वचनम् । **नक्षत्रे च लुपि** ॥ नक्षत्र इत्यनन्तरं प्रकृत्यर्थे सतीति शेषः । लुप्शब्देन लुप्संज्ञया लुप्तप्रत्ययार्थो विवक्षितः । तदाह । **नक्षत्रे प्रकृत्यर्थे इति** ॥ **अधिकरण इति** ॥ 'सप्त-म्यधिकरणे च' इत्यतः मण्डूकप्लुत्या तदनुवृत्तेरिति भावः । **मूलेनेति** ॥ मूलनक्षत्रयुक्ते काले इत्यर्थः । 'नक्षत्रेण युक्तः कालः' इत्यण् । 'लुबविशेषे' इति तस्य लुप् । अधिकरणे किम् । मूलं प्रतीक्षते । नक्षत्र इति किम् । पञ्चालेषु तिष्ठति । इह 'जनपदे' इति लुप् । **सप्तमी-पञ्चम्यौ** ॥ कारकशब्दः कर्तृत्वादिशक्तिपरः, न तु कर्त्रादिपरः, व्याख्यानात् । मध्यस्याव-धिद्वयसापेक्षत्वात् कारकयोर्मध्यमिति विग्रहः । तदाह । **शक्तिद्वयमध्ये इति** ॥ 'कालाध्वनो-रत्यन्तसंयोगे' इत्यनुवृत्त्य पञ्चम्यन्ततया विपरिणम्यते इत्याह । **यौ कालाध्वानाविति** ॥ **अद्य भुक्त्वेति** ॥ सामीपिकाधिकरणत्वे सप्तम्यामेव प्राप्तायां वचनम् । अद्य भुक्त्वा द्व्यहे अतीते तत्समीपे तृतीयेऽह्नि भोक्तेत्यर्थः । भविष्यति लुट् । **कर्तृशक्त्योरिति** ॥ अद्यतन-भुजिक्रियानिरूपितकर्तृत्वस्य द्व्यहोत्तरदिनगतभुजिक्रियानिरूपितकर्तृत्वस्य चेत्यर्थः । कारकशब्दस्य

लक्ष्यं विध्येत् । कर्तृकर्मशक्त्योर्मध्येऽयं देशः । अधिकशब्देन योगे सप्तमी-पञ्चम्याविष्येते । 'तदस्मिन्नधिकम्–' (सू १८४६) इति 'यस्मादधिकम्–' (सू ६४५) इति च सूत्रनिर्देशात् । लोके–लोकाद्वा अधिको हरिः ।

## ६४४ । अधिरीश्वरे । (१-४-९७)

स्वस्वामिसम्बन्धे अधिः कर्मप्रवचनीयसंज्ञः स्यात् ।

## ६४५ । यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी । (२-३-९)

अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात् । उप परार्धे हरेर्गुणाः । परार्धादधिका इत्यर्थः । ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी । अधि भुवि रामः । अधि रामे भूः । 'सप्तमी शौण्डैः' (सू ७१७) इति समासपक्षे तु रामाधीना । 'अषडक्ष–' (सू २०७९) इत्यादिना खः ।

---

कर्त्रादिपरत्वे त्विह न स्यात् । क्त्वाप्रत्ययस्य कर्त्रैकत्वे विधानात् । कर्तृशक्तिस्तु भुजिक्रिया-भेदात् भिद्यत एव । कारकद्वयमध्येऽप्युदाहरति । **इहस्थोऽयमिति** ॥ इहापि देशतस्सामीपिकमधिकरणत्वं पञ्चमीसप्तम्योरर्थः । इह तिष्ठन्नयं इष्वासः इषुणा क्रोशोत्तरसमीपदेशे लक्ष्यं विध्येदित्यर्थः । **कर्तृकर्मशक्त्योरिति** ॥ कर्तृत्वकर्मत्वरूपशक्त्योर्मध्ये इत्यर्थः । कारकशब्दस्य कर्त्रादिपरत्वे त्विहैव स्यात् । अद्य भुक्त्वायमित्यत्र न स्यादिति सूचयितुमिदमप्युदाहृतम् । ननु लोके लोकाद्वा अधिको हरिरित्यत्र अवधित्वसम्बन्धे शेषषष्ठ्येवोचितेत्याशङ्क्य आह । **अधिकशब्देनेति** ॥ **लोके लोकाद्वेति** ॥ अवधित्वसम्बन्धस्सप्तमीपञ्चम्योरर्थः । लोकापेक्षया श्रेष्ठ इत्यर्थः । अधेः कर्मप्रवचनीयकार्यं वक्ष्यन् कर्मप्रवचनीयमाह । **अधिरीश्वरे** ॥ ईश्वरशब्देन ईश्वरत्वं स्वस्वामिभावसम्बन्धात्मकं विवक्षितम् । 'कर्मप्रवचनीयाः' इत्यधिकृतम् एकवचनान्ततया विपरिणम्यते । तदाह । **स्वस्वामीति** ॥ **यस्मादधिकम्** ॥ कर्मप्रवचनीययुक्ते इत्यनुवर्तते । तदाह । **अत्र कर्मप्रवचनीयेति** ॥ शेषषष्ठ्यपवादः । **उपपरार्धे इति** ॥ अवधित्वं सप्तम्यर्थः । तदाह । **परार्धादधिका इत्यर्थः इति** ॥ यस्मादधिकं सङ्ख्यान्तरं न विद्यते तत्परार्धम् । तदपेक्षयेत्यर्थः । 'उपोऽधिके च' इति उपेत्यस्य कर्मप्रवचनीयत्वस्येदं फलम् । यस्येश्वरवचनमित्यस्य यत्सम्बन्धी ईश्वर उच्यते ततस्सप्तमीत्येकोऽर्थः । इह यच्छब्देन स्वमुच्यते । एवञ्च स्ववाचकात्सप्तमीति लभ्यते । ईश्वरशब्दो भावप्रधानः । यस्येश्वरत्वमुच्यते ततस्सप्तमी इत्यन्योऽर्थः । यन्निष्ठमीश्वरत्वमुच्यते ततस्सप्तमीति यावत् । एवञ्च स्वामिवाचकात्सप्तमीति लभ्यते । तदाह । **ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमीति** ॥ **अधिभुवि राम इति** ॥ अधिरीश्वरपर्यायः । सम्बन्धस्सप्तम्यर्थः । भुवः स्वामी राम इत्यर्थः । अत्र स्ववाचकात्सप्तमी । **अधिरामे भूरिति** ॥ अत्र अधिः स्वशब्दपर्यायः । सम्बन्धस्सप्तम्यर्थः । रामस्य स्वभूता भूरित्यर्थः । अत्र स्वामिवाचकात्सप्तमी । **समासपक्षे त्विति** ॥ शौण्डादिगणे अधिशब्दस्य पठितत्वेन तेनाधिशब्देन रामे इति

## ६४६ । विभाषा कृञि । (१-४-९८)

**अधिः करोतौ प्राक्संज्ञो वा स्यादीश्वरेऽर्थे । यदत्र मामधिकरिष्यति । विनियोक्ष्यते इत्यर्थः । इह विनियोक्तुरीश्वरत्वं गम्यते । अगतित्वात् 'तिङि चोदात्तवति' (सू ३९७८) इति निघातो न ॥**

इति सप्तमी विभक्तिः ।

### इति कारकादिविभक्तिप्रकरणम् ।

---

सप्तम्यन्तस्य समासे सति 'सुपो धातु' इति सुब्लुकि रामाधिशब्दात् 'अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात् खः' इति खप्रत्यये 'आयनेयीनीयियः' इति तस्य ईनादेशे रामाधीना भूरिति सिद्ध्यति । रामस्वामिकेत्यर्थः । विभक्त्यर्थे अव्ययीभावे त्वधिरामं भूः । रामाधिकरणिका भूरित्यर्थः । खप्रत्ययस्तु न । अध्युत्तरपदत्वाभावात् । **विभाषा कृञि** ॥ 'अधिरीश्वरे' इत्यनुवर्तते । कर्मप्रवचनीया इत्यधिकृतम् । तदाह । **अधिः करोताविति** ॥ कृञ्धातौ परे अधिः कर्मप्रवचनीयो वा स्यादीश्वरत्वे इति यावत् । **यदत्र मामधिकरिष्यतीति** ॥ अस्मिन्विषये मामधिकरिष्यतीति यत्तद्युक्तमित्यर्थः । अत्र कर्मप्रवचनीययोगे मामिति द्वितीया । अधिकरिष्यतीत्येतत् व्याचष्टे । **विनियोक्ष्यत इत्यर्थः इति** ॥ तर्हि कर्मत्वादेव द्वितीयासिद्धेः किं कर्मप्रवचनीयत्वनेत्यत आह । **अगतित्वादिति** ॥ **तिङि चेति** ॥ उदात्तवति तिङि परे गतिर्निहन्यत इति तदर्थः । अत्र करिष्यतीति तिङन्तमुदात्तवत् । 'तिङ्ङतिङः' इति निघातस्य 'निपातैर्यत्' इत्यादिना निषेधात् । ततश्च अधेरत्र गतित्वान्निघातः इह प्राप्तः । कर्मप्रवचनीयत्वे तु स न भवति । तेन गतित्वस्य बाधात् । अतः अधेर्निघाताभावार्थमिदं सूत्रमिति सिद्धम् ॥

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां विभक्त्यर्थनिरूपणं समाप्तम् ।

---

श्रीरस्तु ।

# ॥ अथाव्ययीभावसमासप्रकरणम् ॥

## ६४७ । समर्थः पदविधिः । (२-१-१)

**पदसम्बन्धी यो विधिः स समर्थाश्रितो बोध्यः ।**

---

तदेवं विभक्त्यर्थं निरूप्य तदाश्रितसमासान्निरूपयिष्यन् तदुपोद्घातत्वेनाह—**समर्थः पदविधिः** ॥ विधीयत इति विधिः कार्यम् । पदस्य विधिः पदविधिरिति शेषषष्ठ्या समासः । तदाह । **पदसम्बन्धी यो विधिरिति** ॥ **समर्थाश्रित इति** ॥ सूत्रे समर्थशब्दस्समर्थाश्रिते लाक्षणिक इति भावः । सामर्थ्यं द्विविधम् । 'व्यपेक्षालक्षणम्, एकार्थीभावलक्षणञ्च । तत्र स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशाद्यः परस्परान्वयः तत् व्यपेक्षाभिधं सामर्थ्यम् । विशिष्टा अपेक्षा व्यपेक्षेति व्युत्पत्तेः । सम्बन्धार्थस्समर्थ इति व्युत्पत्तेश्च । इदञ्च राज्ञः पुरुष इत्यादिवाक्य एव भवति । तत्र च एकैकस्य शब्दस्य यो यस्सन्निहितो योग्यश्च तेन तेनान्वयो भवति । यथा राज्ञः पुरुषोऽश्वश्चेति, राज्ञो देवदत्तस्य च पुरुष इति, ऋद्धस्य राज्ञः पुरुषः, इति च । एकार्थीभावलक्षणसामर्थ्यन्तु प्रक्रियादशायां प्रत्येकमर्थवत्त्वेन पृथक् गृहीतानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादकतारूपम् । सङ्गतार्थस्समर्थः, संसृष्टार्थस्समर्थ इति व्युत्पत्तेः । सङ्गतिस्संसर्गश्च एकीभाव एव । यथा सङ्गतं घृतं तैलेनेति, एकीभूतमिति गम्यते । यथा वा संसृष्टोऽग्निरिति, एकीभूत इति गम्यत इति भाष्याच्च । इदञ्च सामर्थ्यं राजपुरुष इत्यादिवृत्तावेव । अत एव ऋद्धस्य राजपुरुष इत्येवं राज्ञि पुरुषविशेषणे ऋद्धत्वविशेषणन्नान्वेति । विशिष्टस्य एकपदार्थतया राज्ञः पदार्थैकदेशत्वात् । देवदत्तस्य गुरुकुलमित्यत्र तु उपसर्जनस्य नित्यसापेक्षत्वात् समासः । यदा गुरुवद्देवदत्तोऽपि विशेष्ये प्रधाने कुल एवान्वेति, तत्र गुरुणा कुलस्य उत्पाद्यत्वसम्बन्धेनान्वयः । देवदत्तेन तु कुलस्य तदीयगुरूत्पाद्यतयाऽन्वयो गुरुगर्भः । उक्तञ्च हरिणा—"सम्बन्धिशब्दस्सापेक्षो नित्यं सर्वस्समस्यते । वाक्यवत् सा व्यपेक्षा हि वृत्तावपि न हीयते ॥" इति । "समुदायेन सम्बन्धो येषां गुरुकुलादिना । *संसृष्टावयवास्ते तु युज्यन्ते तद्वता सह ॥" इति च । एतेन 'अयश्शूल' इति सूत्रे भाष्ये 'शिवस्य भक्तः' इत्यर्थे शिवभागवतः इत्यादि व्याख्यातम् । एकार्थीभावश्चायम् अलौकिकविग्रहवाक्ये कल्प्यते । यथा लादेशभूतशतृशानचोः अप्रथमासामानाधिकरण्यं लकारेऽपि कल्प्यते तद्वत् । अत एव 'लस्य अप्रथमासमानाधिकरणेनार्थेनायोगादादेशेऽनुपपत्तिः, तस्य क्वापि प्रयोगाभावादित्याक्षिप्य

---

* "संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह" इति पाठान्तरम् ।

